# द्वैतनिर्णयः ।

महामहोपाध्याय वाचस्पतिमिश्र विरचितः ।

तरुनी ग्रामनामिना वैयाकरण केसरिणा

श्रीपरमेश्वरशर्मणा संशोधितः ।

मिथिलाग्रन्थमालासम्पादकव्याकरणतीर्थ

श्रीहरिनारायणशर्मणामाज्ञया



दरभङ्गा राजधान्यां

श्रीरमेश्वरयन्त्रालये मुद्रितः प्रकाशितश्च ॥

शाके १८३० संवत् १९६५

मूल्यं १)

# ॥ द्वैतनिर्णयः ॥



आभीरदारकमुदञ्चितकिङ्किणीकमा
ताम्रपाणिचरणं पुरुषं पुराणम् । मञ्जीर
मञ्जुमरुणाधरमम्बुजाक्षमद्वैतचिन्मयम-
नादिमनन्तमीडे ॥ १ ॥ सरस्तुलि
तसागरं व्यधित योनृपग्रामणीर्भुजावि
जितकाञ्चनै रदित यस्तुलापूरुषान् ।
सएषनृपभैरवः समरसीम्नि पञ्चाननो
जयत्यरिविदारकोजगति राजवृन्दार
कः ॥ २ ॥ अयं वाग्विलासैरतीतः क
वीनां गुणैर्द्दोः प्रतापानतीतोभटानाम् ।
त्रिलोकीपतिप्रेयसीवासभूमिः पुनीते ज-
गन्मण्डलं राजचन्द्रः ॥ ३ ॥ सत्यभामे-
व कृष्णस्य गौरीव मदनद्विषः । सविशे-
षा जगत्येषा भूपभैरवभाविनी ॥ ४
विष्णोरन्तः पुरमिव शम्भोरिव देह [illegible]ण-
धनसं-

द्धैम् । देवी सनाभिरेषा जयति जयानो
महादेवी ॥ ५ ॥ एषा विदितविशेषा प्रस
द्य यं वीक्षते जगज्जननी । तदुपरि प-
रितः प्रपतति हाटकहीरकमयी वृष्टिः ॥६॥
श्रीभैरवेन्द्र धरणीपतिधर्म्मपत्नी राजा
धिराजपुरुषोत्तमदेवमाता । वाचस्पतिं
निखिलतन्त्रविदं नियुज्य द्वैते विनिर्णय
विधिं विधिवत्तनोति ॥ ७ ॥
सिचयैः काञ्चननिचयैः परिपूज्य गुरुं ज-
गज्जननी । अभिदेलिममपचेलिममक्षर
मक्षरमयं वपुस्तनुते ॥ ८ ॥ इष्टं स्तुवाना
दुरितं धुनाना जगत्पुनाना क्षणमीक्षितेन ।
श्रीभैरवक्ष्मापतिधर्म्मपत्नी यशः शरीरं
निजमातनोति ॥ ९ ॥ रत्नैर्ज्जगन्मण्डल
मावृणोति करोतिखातैर्गगनैकशेषम् ।
दानोदकैः सागरतामुपेतं विश्वम्भरामण्ड-
लमव्यवस्थम् ॥ १० ॥

तत्रादौ नामनिर्णयः ॥ शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रसंश्रयम् । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोरित्यत्रेतिपदस्वरसेन यद्यपि शर्मादिपदात्मकमेव नामावगम्यते तथापि तावन्मात्रं न नाम किन्तु तद्वन्नामेति निर्णीयते द्व्यक्षरं चतुरक्षरमित्यादिगृह्यदर्शनात् एवञ्च हरिशर्मा नारायणशर्मेत्यादि सिद्ध्यति शर्मादिपदमात्रात्मकत्वे तु नाम्नश्चतुरक्षरता न स्यादेव तथा च नारायणादिपदशर्मादिपदाभ्यां निर्मितमेव नाम द्व्यक्षरादिकं तु शर्मपूर्वप्रतीकमात्रमेव अतएव दानादौ नामोच्चारणे चैत्रशर्मणइत्येव श्रूयते ॥ गोभिलः । शर्मन्नर्घादिके कार्यं शर्मा तर्पणकर्मणि । शर्मणोऽक्षय्यकाले स्यादेवं कुर्वन्न मुह्यतीति । इदमप्युत्तरप्रतीकमात्रपरमुक्तगृह्येन सहैकमूलकत्वात् एतेन शर्म सुखनीयमितिकर्कदर्शनाच्छर्मपद मर्थपरं तेन शुभंकरेत्याद्येव नामेत्यपास्तम् गोभिलविरोधात् कर्कस्तु पूर्वप्रतीकमात्रपरस्तेन शुभङ्कर शर्मा भीमवर्मेत्यादि सिद्ध्यति एवञ्च सर्वत्रैव हव्ये कव्ये चेदृशमेव नाम तेषां प्रयोज्यम् अपवादकाभावादिति ॥ अत्रैव मनुः । मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् । वैश्यस्य धनसं-

युक्तं शूद्रस्य तु जुगुप्सितम् ॥ शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् । वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥ स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोरमम् । मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ शर्मवर्मप्रभृतीन्युत्तरपदानि कार्याणीति मनुटीकापि । स्त्रीनाम तु यशोदादेवीत्यपि, स्त्रीणां दान्तमित्यपि पूर्वप्रतीकमात्रपरम् । वैश्यस्य गुप्तान्तमिति तु पराशरः । एवंच दानादौ चैत्रशर्मणे ब्राह्मणायेत्यादिस्वरूपं वाक्यम् ॥ नामकरणं त्वेकादशे तदसंभवे द्वादशदिने कार्यम् एकादशे द्वादशे वाऽहनि पिता नाम कुर्यादिति श्रुतेः । नत्वयमैच्छिकोविकल्पोऽष्टदोषग्रासात् ॥ ननु किमिदं दानम् । स्वस्वत्वानिवृत्ति-परस्वत्वोत्पत्तिफलक इच्छाविशेष इत्यवेहि । अस्य चेच्छाविशेषस्य इदं न ममेतिशरीरम् तच्च सम्प्रदानस्य स्वीकारं ददस्वेतिरूपमासाद्य जायते जातं च दातुः स्वत्वध्वसं ग्रहीतुश्च स्वत्वं जनयति यत्रच दानोद्देश्यो न प्राक् स्वीकरोति तत्र न दानं नवा दातुः स्वत्वमपैति तद्रूपसहकारिविरहात् अत एव सम्प्रदानस्यापि तत्र कारकत्वमनुमतिद्वारा तदनुमतिप्राप्त्यर्थमेव इदं ददानीति दाता सम्प्र-

दानहस्ते जलं ददाति अनन्तरं तु देयप्रोक्षणम्
तस्मादद्भिरभ्योक्ष्यदद्यादिति हारीतवचनात् यत्र
तु न तादृशं जलदानं तत्र भविष्यद्द्रव्यप्रतिप-
त्तिभागिनस्तावत्सम्प्रदानता ऽपि न कारकत्वस्यैवाभा
वात् सम्प्रदानस्य च कारकविशेषत्वात् ॥ नन्वेवं
यत्राऽव्यवधानेनैवद्रव्यप्रतिपत्तिस्तत्रापि प्रतिपत्ति
भागिनस्तावत्सम्प्रदानता नास्ति स्वीकारणा
विरहात् तथाच तत्र सम्प्रदानानुशिष्टा चतुर्थ्यपि
न स्यादिति चेत् सत्यम् चतुर्थी हि तत्राकारकए-
व वह्निमनुमिनोमीत्यत्र द्वितीयावत् ॥ दानस्या-
दौ देयब्राह्मणौ पूज्यौ, योऽर्चितः प्रतिगृह्णाति यो-
र्चयित्वा प्रयच्छति । उभौ तौ वसतः स्वर्गे विपरीते
विपर्यय इति यमवचनात् । ननु ब्राह्मणोद्देशेन
यत्र द्रव्यत्यागस्तत्रापि ददातिप्रयोगः क्रियते स-
चकथं स्यात् नहित्यागमात्रे ददातेः शक्तिः । न-
चोत्सर्गेऽपिददातिर्मुख्य एवेति वाच्यम् स्वस्वत्वनि-
वृत्तिपूर्वक परस्वत्वोत्पत्त्युपलक्षिते तद्विशेषिते वा-
त्यागे ददातेः शक्ततया स्वस्वत्वध्वंसमात्रोप-
लक्षिते तद्विशेषितेऽपि वा त्यागे ददातेः शक्तौ
तस्य नानार्थतापत्तेः । साचायुक्ता अन्याय-
श्चानेकार्थत्वमिति जैमिनिवचनात् लक्षणादि-

नाऽपि प्रयोगोपपत्तेः यत्रत्वेकानुपपत्तिप्रतिसन्धान मन्तरेणैवापरार्थधीर्गोशब्दादिवत् तत्र नानार्थता युक्तैव ददातौ तु न तथा दानानुपपत्तिप्रति सन्धानानन्तरमेव ददातिप्रयोगे उत्सर्गप्रतीतेः। नन्वेवमुत्सर्गे ददातेरलौकिकी लक्षणा सा चाऽयुक्ता, तदुक्तं अस्मदायत्ते हि शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इति तथाच ब्राह्मणायाहमुत्सृज्य इत्ये व प्रयोक्तव्यं नतु दद इति चेन्मैवं उत्सर्गेऽपि ददा-तिर्मुख्य इति नयमाश्रित्य दद इति प्रयोगकरणात् ॥ यत्तु दानमेवेदं सम्प्रदानस्य तु कारकतापरमिह नास्तीति तन्न ससम्प्रदानको हि त्यागोदानं, देव तोद्देश्यकस्तुत्यागोयागः, प्रक्षेपावच्छिन्नस्तु त्यागो होमः, एतत्रितयाभिन्नस्तु त्यागउत्सर्गः तत्रापि स प्रतिपत्तिके ददातिर्मुख्यइति हि प्राभाकराः। दातु मुत्सृज्य इति सर्वथैवाऽयुक्तं द्वयोरपि धात्वोरिच्छा र्थकत्वेनेच्छां कर्तुमिच्छामीत्यन्वयप्रसङ्गात्, फलार्थ-त्वे त्वस्वीकर्तुमस्वीकरोमीत्यन्वयापत्तेः। परस्वी कर्तुमस्वीकरोमीति तस्यार्थ इतिचेत्तर्हि ददात्यर्थैक-देशे तद्भिन्ने वा दातुमिति प्रयोगोऽयं तथाच लक्षणा स्यात्। अथासत्कृत्य दानमस्वर्ग्यं यच्च दत्त्वा परि तप्यते, तद्वदानमफलं यच्चोपकारिणे ददाति, तन्मात्रं

परिक्लिष्टं यत्र सोपधन्ददाति, अन्यश्चाविनमल्पफलं यच्चापात्राय ददाति, अनिच्छादानं रावति यत्रदत्त्वा परिकीर्त्यते, स्मयदानमासुरं यच्चाश्रद्धया ददाति, क्रोधाद्राक्षसं यच्चाकुश्य ददाति दत्त्वावाक्रोशति, असत्कृतं पैशाचं यच्चावज्ञातं ददाति दत्त्वावाऽवजानीते, मुमूर्षुस्तामसं यच्चाप्रकृतो ददाति, एतेदानोपसर्गाद्यैरुपसृष्टं दानमसिद्धमस्वर्ग्यमयशस्यमङ्गुवफलं भवत्यल्पफलंवा ॥ तर्ह्यदानं तर्हि संकल्पकाले अदानं देयद्रव्यस्य सम्प्रादानेऽसमर्पणम् । तन्मात्रं यथोक्तोपकरणरहितम् । सोपधं सच्छद्म । स्मयोमानभेदः ॥ इति हारीतवचनादविद्यमानस्यापि दान सिद्धौ कथमविद्यमानदाननिषेधं ब्रूष इतिचेदुच्यते त्यागकाले विद्यमानस्यापि वस्तुनोऽनर्पणसम्भवे तर्ह्यदानमफलमित्येतस्य तादृशदानाभासाविषयत्वम् । यद्वाऽनेन निन्दार्थवादेनाविद्यमानदानस्यैव निषेधनं तस्माद्विद्यमानस्यैव वस्तुनो दानमुत्सर्गश्च अविद्यमाने स्वत्वध्वंसाभावात् । तत्रापि प्रतिग्रहोमुख्यस्तत्र सम्प्रदानस्वीकारणायाः सम्भवेन संम्प्रदानस्य क्रियायां कारकत्वेन सम्प्रदानचतुर्थ्यन्वयात् । उत्सर्गे तु न तथा भविष्यत्प्रतिपत्तिभागिनोदानात्प्राक्स्वीकारणाविरहेण कारकत्वासम्भवेन

सम्प्रदानत्वासम्भवात् । उभयस्मिन्नपि कल्पे देय द्रव्ये परस्वत्वोत्पत्त्यनन्तरमेव दक्षिणा तत्पर्यन्तेनैव दाननिर्वाहात् । तच्चाव्यवहितं तस्यैव फलस्य गम्यादिवद्ददातिधात्वर्थावच्छेदकत्वात् । एवमनृत्विक्त्वे दक्षिणादानं नास्त्येव ऋत्विगानतिद्वारा तस्य क्रत्वङ्गत्वादिति गुरुमतं तच्च शब्दनिर्णये विस्तरेण खण्डितमितिनेह तन्यते ॥ अथ तुलापुरुषद्वैतं निरूप्यते ॥ तत्र, ततोऽवतीर्य गुरवे पूर्वमर्धं निवेदयेत्। ऋत्विग्भ्योऽ परमर्धञ्च दद्यादुदकपूर्वक मितिश्रवणादर्धदानमुक्तफलकामनया गुरवे ततस्त द्दक्षिणा, ततोऽर्धदानमृत्विग्भ्यस्ततस्तद्दक्षिणेति हेमाद्रिस्तन्न एवमार्थवादिकफलमवयवद्वयस्य दान द्वये आवृत्त्या लगिष्यति तुलापुरुषावयविनश्चैक दानासम्भवात्तत्र न लगिष्यतीति यत्राम्नातं फलं तत्र नान्वितं स्यात् यत्र च नाम्नातं तत्रान्वितं स्यात् । द्विगुणञ्च स्यादर्धदानयोश्च द्वयोर्द्दक्षिणाद्वयं स्यादिति महद्वैशसम् ॥ अथैकएव त्यागएकएव ददानीत्युपनयएकमेव च वाक्यं तद्यथा यथोक्त फलकामइदं स्वशरीरसम्मितकाञ्चनार्धंगुरवे तुभ्य-मिदंस्वशरीरसाम्मितकाञ्चनापरार्धमृत्विग्भ्योयुष्म-भ्यमहं सम्प्रददेइति । एवञ्चैकएव ददात्यर्थभूत-

स्त्यागः, एकएव च प्रयोगः, अर्धयोस्तु दानमेव च
समुदायस्यापिदानं नहि समुदाय संख्यादिलक्षणो
ऽर्द्दीयते किन्तु समुदायिनएव, एकैव च दानक्रि
या तच्च तांश्चोद्दिश्य भागशोदातुः स्वत्वध्वंसंजन
यति ग्रहीतॄणांच तथैव स्वीकारात्तथैव स्वत्वानि जन
यतीति चेन्न एतादृशदानक्रियायां प्रमाणाभावात्
गुरवे पूर्वमर्धन्निवेदयेत् ऋत्विग्भ्योऽपरमर्धन्दद्यादि
ति तुलापुरुषदानविधिरेवात्र प्रमाणमिति चेद्भ्रा
न्तोऽसि नायन्दानविधिः किन्तु दानोदीच्यप्रतिप
त्तिरूपतदिति कर्त्तव्यताकथनमेतत् । अतएवानेन
विधिनेत्यपिसंगच्छते नहि विधिना तुलापुरुषाचर
णं किन्तु रीत्या तथाचानया रीत्या यस्तुलापुरुषमा
चरेत्स यथोक्तफलभाग्भवतीति तद्वाक्यार्थः । न
च मौहादाने विध्यभावादयमेव विधिः । अर्थ
वादादेव प्रवर्तकेष्टसाधनताज्ञानोदये विध्यभाव-
स्याकिञ्चित्करत्वात् ततएव विधेः कल्पनाद्वा ॥
नन्विदं रीतिकथनमितिसत्यं किन्तु ततएवार्धयोर्द-
नमायातीति चेन्न नहिखण्डयोर्दानंतयोःप्रागकरणा-
त् नाप्यभिसन्धितः आविनिगमात् । कः खण्डोगुरोः
कोवाऋत्विजाम् । नह्यभिसन्धिरेवान्तरा शकलीकरो-
ति तस्माद्राशेरेव दानम्, अन्यथाऽसंभवादिति ॥ अथ

तुलितं विभज्यावधार्य तन्त्रेणोत्सृज्यते, त्यागवाक्य मुक्तमेव, प्रमाणन्तु तत्र ततोऽवतीर्यगुरवइत्यादि। नचजलदानादिकरणभेदात्तन्त्रासम्भवः, तत्रापि तन्त्रात्। तेनपृष्ठस्थ द्वादशहस्तके गुरुहस्तएवाग्ने यर्तार्थे जलदानं प्रतिग्रहदानञ्च तेन गुरवे ऋत्वि ग्भ्यश्चेति चतुर्थीद्वयं घटते॥ हन्तैवं निवेदयेद्दद्यादि ति क्रियाद्वयश्रवणाद्दानद्वयमपिस्यात् नसमादयम र्थः, अवतीर्य दद्यात् महादानमितिप्रकरणात्। ततः पूर्वमर्धमुदकपूर्वकं गुरवे निवेदयेदपरमर्धमृत्विग्भ्यो निवेदयेदिति॥ नन्वेवमेकस्यापि दानस्य नाना सम्प्रदानकत्वे परिषदधिकरणविरोधः, तथाहि नाना सम्प्रदानके हि दाने मिलितानामुद्देश्यत्वमुत प्र- त्येकम्। अत्र नाद्यः मिलितानामचैतन्येनास्वीकर्तृ त्वात्। प्रत्येकञ्च स्वीकर्तृत्वसम्भवेऽपि दातुस्तथा- ऽनुद्देशात्। दाता हि स्वत्वभागितया मिलितमभिसं धत्ते न तु प्रत्येकमिति॥ ननु यथा ग्रहं संमार्ष्टी त्यत्र सर्वस्यामेव ग्रहव्यक्तौ ग्रहत्वेनैकेन रूपेणोप- स्थितायां संमार्गान्वयः तथाऽत्रापिऋत्विक्त्वेनैकेन- रूपेणोपस्थितानां त्रयोदशानां गुर्वादीनां दानान्व- योऽस्तु स्वत्वन्तु तेषां भ्रातृणामिव कृत्स्नएव धने। अतएवाग्रे श्रुत्यनुसारेणार्धादिभागकल्पनाऽपि मैवं।

धर्मिणाऽनुद्देश्यत्वे विकल्पापत्तेः । अतएव यदग्नये च प्रजापतये च सायमग्निहोत्रं जुहोतीति श्रुतावपि अग्निप्रजापतिभ्यां स्वाहेतिक्रमः । नचेतरेतरसमाहार विकल्पावकाशः, इतरेतरयोगस्यैवेह मयोपगमात् ऋत्विग्भ्यइतिश्रुतेः । अतएव क्षौमे वसानावग्नीनाद धीयातामित्यत्रापि यजमानदम्पत्योरेवाधानपदान्मिलितोपस्थितयोराधानान्वयोविधीयतइति ॥ अत्रोच्यते यथाऽऽधाने दम्पत्योरन्वयः साहित्येन तथर्त्विक्त्वेनैकेन रूपेणोपस्थितानां त्यज्यमानमहा दानान्वयोऽप्यस्तु । ननुबहूनां सम्प्रदानानामेक स्मिन् वस्तुनि नावच्छेदभेदेन स्वत्वमसम्भवात् एक एव हिसुवर्णराशिरनवच्छेदेन दीयतइति ॥ नचार्ध गुरवेऽर्धमृत्विग्भ्योदीयत इत्यर्धयोरेव स्वत्वं च स्वत्वानि चोतिवाच्यं नाहिकाञ्चनं शकलीकृत्य दीयते किन्तु दत्वा शकलीक्रियते ॥ नन्वेकमेव दीयतइति सत्यं किन्तु भागशएव तत्र स्वत्वान्युदीयन्ते तथैव तेषां स्वीकारात् भागशएव तानुद्दिश्य स्वत्वंभ्योति तथैव दातुरभिसन्धानादितिचेन्न नाहिभागेषु भिन्नाभिन्नेषु स्वत्वोदयव्ययोः भागानामेवाकरणात् किन्तु कृत्स्न एव सुवर्णे दातुस्त्यागात्स्वत्वं व्योि । कृत्स्नएव च सुवर्णेऋत्विजामानिभागेण द्व्यणुकादारभ्य चरमस्थूल

पर्यन्तं स्वत्वानिजायन्ते स्वीकारात् पितृधनेषु भ्रा॰ तृणामिव जन्मतः ॥ नन्वेवं सर्वेषामेव स्वत्वंसर्वस्मिन्नेव द्व्यणुकादि चरमस्थूलपर्यन्ते सुवर्णे स्यात्तथाच क्षोदीयानपितदवयवोनैकेन विनियोज्यः साधारण्यात् आविभक्तापितृधनयादीतिचेद्बाढम्, अतएव बहुसाधारणे धने एकतमेन कृतं दानविक्रयादि निवर्त्यमिति स्मृतिः ॥ अथ द्वादश द्वादशाद्येभ्यः षट्षड्द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्य इति श्रौतकात्यायनसूत्रेण ज्योतिष्टोमीयदक्षिणागोशतस्यैकन्दानं भागशस्तु स्वत्वानीति सिद्धमितिचेत् तथापि भागशोऽपि स्वत्वोदयेऽनध्यवसायः सएव नहिविभागं विना कोऽपि भागपरिचायकः । नचास्तु विभागएवनथा नहियस्तत्र चैत्रस्य प्रतिग्रहणं भागस्तत्रैव तदक्षपातइति विना दैवव्यापारं घटते तस्माद्विभागः प्रसृतस्वत्वानां संकोचाय प्रादेशिकतत्तत्पुरुषीयप्रत्यग्रस्वत्वाय वा नतु स्वस्वभागपरिचयाय । नहि विभागफलं भागपरिचयः, क्वचिदप्यदर्शनात् ॥ नन्वनेकस्मै एकस्याव्यक्तेर्दानमेव न संभवतीति चेन्नैवं प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मं होत्रे ऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां॰

(१) श्रौतसूत्रे तर्पणी ॥

द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणा च्छंसिने वाससी नेष्टापोतृभ्याᳲस्थूरियवाचितमच्छा वाकायानड्वाहमग्नीधे इति यजुर्वेदीयबौधायन शाखीयप्रथमाष्टकीयाष्टमप्रश्ने प्रस्तोतृप्रतिहर्त्रोरेक स्यैवाश्वस्य दक्षिणाभूतस्य दानकथनात्। पष्ठौही प्रथमगर्भा गौः प्रथमगर्भाः पष्ठौह्यो दक्षिणा इति श तपथात् ॥ अथ यस्य वस्तुनो विषमांशस्य प्रतिपत्ति स्तस्य बहुभ्यएकदानक्रिया न सम्भवतीति ब्रूमइ ति चेन्न तृतीयाध्यायभवदेवविरोधात् तथाच भवदेव फक्किकादक्षिणादानमुपक्रम्य, तस्यद्वादशशतं दक्षि- णेत्येकत्वश्रुतेर्दक्षिणादानमेकमेव। नचात्र ग्रहवदेक त्वाविवक्षा तत्रहि ग्रहैर्जुहोतीतिवाक्येन दशग्रहा गृह्यन्त इति नेधान्दशानामपिसंस्काराकांक्षायां युक्तैक त्वस्याविवक्षा अत्रद्वादशाधिकगोशतरूपदक्षिणादान स्यविभिन्नस्य वाक्यान्तरेणाप्राप्तत्वात् दक्षिणोपरागेणा त्रश्रुतस्यैकत्वस्य न परित्यागइति गवां शतं द्वादशाधि कशतञ्च भिन्ने दक्षिणे तथाचात्रोपक्रमोपसंहारौ भिन्नविषयाविति चेत् किमतः एकसमुदायदानाक्रि याशेषे विषमोविभागइत्यत्रैव तात्पर्यात्। नन्वेवं

(२) वृषयुक्तं शाकटम् ॥

(३) फ्लैगपुरिनम, शाकटो भार आचितइत्यमरः ॥

परिषदि दत्तमदत्तमिति प्रलापइतिचेन्न यत्र हि बहु संप्रदानके दाने भागवैषम्यमपि देशितं तत्रादावेव दातुस्तथैवाशयः प्रतिग्रहीतॄणामपि तथैव स्वीकार इति तादृशविभागपर्यन्ता दानक्रिया तेन विभागेन विना न पूर्यतइति परिषदधिकरणे तात्पर्यं तादृशस्य तु देशितस्य विभागस्य दात्रा करणाभावे परिषदि दत्तमदत्तमित्यादिका निन्दा अतएवात्र यजमानेन संकल्प्य त्रयोदशोऽशेनादौ सकलमेव सुवर्णं त्यक्त्वा पुनरर्द्धं गुरवेऽर्द्धमृत्विग्भ्यइतिरीत्या विभज्य प्रतिपादनीयमन्यथा परिषदधिकरणविरोधः स्यादिति सर्वं समञ्जसम् ॥ एवं तडागेऽपि पञ्चविंशतये सप्तदशभ्यः त्रयोदशभ्योवा ऋत्विग्भ्योगोशतादिकमेकमेव दक्षिणा दीयते नतु विभज्य वाऽऽवृत्त्या वेति॥ हिरण्यगर्भे तु सर्वएव ऋत्विजः स्वशाखोक्तमेव यजमानस्य संस्कारं कुर्युर्न तु तच्छाखीयं विद्याप्रयुक्तिकल्पनापत्तेः संस्कारानुदयस्तु समएव॥ अथजलाशयोत्सर्गः ॥ तत्रजलाशयश्चतुर्द्धा कूपवापीपुष्करिणीतडागभेदात् । एते चत्वारः खननसाध्याः । पञ्चमः सेतुः । तत्र कूपोऽवटः, सचानिर्द्धारकः खातविशेषः, बद्धसोपानोऽयंवापी, "शतधन्वन्तरञ्चैव तावत्पुष्करिणीमता । एतत्पञ्चगुणः प्रोक्तस्तडाग"

इतिवसिष्ठसंहिता ॥ "एवमेव पुराणेषु तडागविधिरु
च्यते । कूपवापीषु सर्वासु तथा पुष्करिणीषु चइति
मत्स्यपुराणवचनेनाप्यमीषां चतुष्टं सिद्धम् ॥ हन्तेवं
पुष्करिण्यांतडागे निवमन्तु मे इतिमन्त्रः पुष्करि
णीपदेनोह्यतासमवेतार्थत्वादितिचेन्न युगपद्विधौ
प्रकृतिविकृतिभावाभावेनोहासम्भवात् तडागपदंतु
जहत्स्वार्थलक्षणया खातपरम् ॥ आदित्यपुराणे ॥
सेतुबन्धरतायेतु तीर्थशौचरताश्चये । तडागकूपक
र्त्तारोमुच्यन्ते ते तृषोभयात् ॥ सेतुरत्र जलधारणहेतु
भूतोबन्धः, तेन तत्कर्तुरुदककर्तृत्वात्तृड्भयाभावः ।
तीर्थशौचं घट्टपरिष्कारः ॥ अथकरणफलम् ॥ तत्र
विष्णुः अथकूपकर्तुस्तत्प्रवृत्ते पानीये दुष्कृतार्द्धं
विनश्यति तत्प्रवृत्ते तस्मात्कूपादुत्थिते ॥ निर्जल
देशे तु नन्दिपुराणे ॥ योवापीमथवा कूपं देशे तो
यविवर्जिते खानयेत्सदिवं याति बिन्दौ बिन्दौ
शतं समाः तोयवर्जिते तोयं विना संकुचितप्राणिग
णे ॥ देवैरेकत्वमतुलं तृष्णाक्षुद्वर्जितस्तथा । तडाग
कर्त्ता वसति स्वर्गे युगचतुष्टयम् ॥ यत्र विप्रोथ गौ
रेका पायिनी सलिलं क्वचित् । तडागं तादृशं कृत्वा
स्वर्गे दशयुगं वसेत् ॥ अथोत्सर्गफलानि ॥ योवापी
मग्निसाक्ष्येण विधिवत्प्रतिपादयेत् । कोणषूदकक्रु

म्भस्थान् समुद्रानर्च्य श्रद्धया ॥ चतुरश्चतुरन्ता च तेन दत्ता मही भवेत् ॥ स्कन्दपुराणे ॥ अवटं यो-नरः कुर्यादपांपूर्णं सुशोभनम् । दद्याच्चब्राह्मणेभ्यस्तं भोजयित्वा यथाविधि ॥ अष्टाभिः सुविचित्राभिः पताकाभिरलङ्कृतम् । पितॄंस्तारयते पश्चात्तन्दत्त्वा सनरोत्तमः ॥ यात्यप्सरःसुगीतेन वरुणस्य सलोक-ताम् ॥ अवटोऽत्रकूपः । अत्रचोत्सर्गः पुष्करिण्या-दीनां यद्यपि त्यागमात्ररूपः। उद्देश्यानां सर्वसत्वा-नां हि नतत्र देवतात्वं अतोनास्य यागत्वं देवतोद्दे श्यहविस्त्यागत्वाभावात्तथापि प्राप्नोतितद्यागबलेन भूयइति मत्स्यपुराणदर्शनात् सत्यागोपि याग इति निर्देश्यः । सचाधिवासनरूपयागाङ्गकतयायज्ञात्मा भवति यागाङ्गकयागस्यैव यज्ञत्वात् अतएव तस्मि-न् करिष्यमाणे यक्ष्येइतिप्रयोगः । तेनश्वोयियक्षुणाऽ धिवासनदिनेऽङ्गाधिकाराय तद्बीजभूतकाम्यप्रधा-नाधिकारसम्पादकः कुशतिलजलत्यागसहितः का-म्याभिलापपूर्वकः प्रधानसङ्कल्पः कार्यः ॥ अत्रच एतान् महाराजविशेषधर्मान् करोति योऽर्थ्यामति-शुद्धबुद्धिः । सयातिरुद्रालयमाशु पूतः कल्पाननेकान्दिविमोदतेच ॥ अनेकलोकान्समहस्तपादीन् भुक्त्वापरार्द्धद्वयमङ्गनाभिः । महैवविष्णोःपरमंपद-

न्तत् प्राप्नोतितद्यागबलेन भूय इत्यर्थवादोस्ति मत्स्यपुराणोक्ततडागोत्सर्गे ॥ अत्रच पूत इतिकर्तृविशेषणं तेन कर्त्तरि पूतत्वान्वयानन्तरं गमनान्वयः पूतत्वञ्च क्षीणपापत्वं तेनपापक्षयः कर्तृविशेषणीभूतोस्यफलं तादृशे च कर्त्तरि रुद्रालयगमनान्वयः। नच तिङ्गतस्य कर्तृत्वाभिधानाद्गमनकर्तृत्वं फलं नतुगमनवत्त्वमितिवाच्यं विवक्षितविवेकेन गमनस्यात्र फलत्वात् सुखी भवतीत्यत्र सुखित्वभवनवत्. भुक्त्वा परार्द्धद्वयमङ्गनाभिरित्यत्र प्राथम्याद्भोगक्रियायामङ्गनानां साहित्येनान्वयः, विमलंजलंनद्याः कच्छे महिष इत्यत्र नद्याजलान्वयवत्। ततस्तु सहैवेति श्रवणाद्विष्णुपदप्राप्तावपि साहित्ये प्रतीते तत्प्रतियोग्याकांक्षायामुपस्थितत्वादङ्गनानामेव तत्प्रतियोगित्वमिति सिद्ध्यति। तदेवं प्रयोगः। पापक्षयपूर्वकरुद्रालयगमनानेककल्पावच्छिन्नस्वर्गलोकहर्षपरार्द्धद्वयावच्छिन्नमहस्तपः प्रभृतिलोकाङ्गनासहितभोगपूर्वकाङ्गनासहितपरमविष्णुपद प्राप्तिकामः श्वः पुष्करिणीजलाशयोत्सर्गयज्ञेनाहं यक्ष्ये ॥ इदमेववाक्यमुत्तरदिने उत्सर्गोपि किन्तु तत्रादौ अद्येति प्रक्षिप्य मध्ये श्व इति बहिःकृत्य काम

इत्यनन्तरं असुं पुष्करिणीजलाशयं वरुणदैवतं सर्व-
भूतोपयोगित्वेन सर्वसत्वेभ्योऽहं समुत्सृज्ये इति प्र-
क्षिप्य कार्यं अयं जलाशयोमयोत्सृष्ट इति तु नवाक्यं
निष्ठाया अतीतार्थत्वेनासमवेतार्थत्वापत्तेः । नचा
यमादिकर्माणिक्तः, तथासति हि जलाशयोयं मया
आरब्धत्यागइति स्यान्नतु क्रियमाणत्याग इति ॥
अयंलडर्थ एव न तु त्वदुक्तनिष्ठार्थः । अतएव त्वम्मया
निमान्त्रितइति प्रकृतावपि त्वामहमामन्त्रय इति
श्रीदत्तोपाध्यायादयः ॥ सर्वसत्वेभ्य इत्युद्देश्यतामा
त्रे चतुर्थी । नचैवमसंकुचितसर्वपदस्वरसात् स्व-
स्याप्युदेश्यवर्गेन्तर्भावात्स्वस्यापिस्वजलाशयजलोप
भोगोनविरुद्धः औपादानिकस्वत्वाविशेषादिति वा-
च्यंतिर्यगधिकरणविरोधात् तथा हि तिर्यकपङ्ग्वार्षेय
देवतानामनधिकार इति तत्रोक्तं तत्र तिरश्चां विशि
ष्टान्तः संज्ञाविरहात् पङ्गोः प्रचरणविरहात् । त्र्यार्षेया
णामन्धबधिरमूकानामवेक्षणश्रवणोच्चारणविरहात्
युक्तोऽनधिकारः, देवतानां त्वत्यन्तविदुषीणां कथम-
नधिकारः अचैतन्ये तु कथं घटवच्छङ्कापि नहि घ-
टोप्यधिकारितया शङ्क्यते । अत्राहुः प्रौढ्या देवता-
नांचैतन्यमास्थाय तासामनधिकारोत्र प्रतिपाद्यते त-

थादि कर्मफलीभूतस्येन्द्रस्येव कर्मफलप्रदेन्द्रस्यापि भवतु चैतन्यं तथापि तस्यानाधिकारः न हि स्वमेव हविस्त्यागभागित्वेनोद्दिश्य स्वयमेव हविस्त्यजतीति सम्भवति न हि स्वकर्तृकहविस्त्यागोद्देश्यत्वं स्वस्य नापि तत्त्यागोद्देश्यताविशिष्टस्य सतस्त्यागकर्तृता । वनवाप्यादित्यागेप्येवं ॥ ननु वाप्यादावेकस्त्यजति सचविश्वैच चोद्देश्याइतिकोविरोधः । हन्त तर्हि इन्द्रोपि स्वयं त्यजतु स्वञ्चान्याश्चदेवताउद्दिश्येति न तत्रापि विरोधः तस्माद्यस्त्यक्ता सन त्यागोद्देश्यः अतएव सत्रे न दाक्षिणा यजमानामेव ऋत्विक्त्वेनाभेदात् त्यागकर्तृत्वत्यागोद्देश्यत्वयोर्विरोधादिति ॥ अथ वाप्यादौ त्यक्तुस्त्यागानुद्देश्यस्याप्यौपादानिकं स्वत्वमास्त्विति चेन्न स्वत्यक्ते स्वोपादानस्य क्वचिदप्यदर्शनात् किञ्च सत्रेपि तर्हि तथास्तु तथा च भङ्ग्या तत्रापि दाक्षिणादाने सिद्धे सत्रे न दाक्षिणेति प्रलापः ॥ अत्र च मुख्यकल्पे पञ्चविंशति ऋत्विजोनव कुण्डानि भवन्ति मध्यमकल्पे सप्तदश ऋत्विजः सप्त कुण्डानि तथा त्रयोदश ऋत्विजः पञ्च कुण्डानि । अवरकल्पे एकमेव कुण्डम् । अत्र चाचार्यकुण्डपूर्वकुण्डदक्षिणकुण्डानां दक्षिणमेखलायां-

योनिः पाश्चिमोत्तरकुण्डानां कुण्डयोर्वा पश्चिममेख-
लायां। तदुक्तं त्रैलोक्यसारे दक्षस्था पूर्वयाम्ये तु
जलस्था पश्चिमोत्तरे। नवमस्यापि कुण्डस्य योनिर्द
क्षदले स्थितेति ॥ दक्षं दक्षिणम्। जलस्था पाश्चिम-
दिक्स्था तेनाचार्यकुण्ड पूर्वदक्षिणकुण्डेषु उदङ्मुखा-
होतारः कलशस्थापनमप्युत्तरदिशि यथापश्चिमम्।
पश्चिमोत्तर कुण्डानां कुण्डयोर्वा प्राङ्मुखाहोतारः प्रा-
ङ्मुखौ होतारौ वा ऐशानीतो यथोत्तरं शान्तिकल-
शाः। शेषं महादानानिर्णयेऽध्यवसेयम्॥ दक्षयेत्तु समं
सर्वानाचार्यं द्विगुणं पुनरिति मत्स्यपुराणदर्शनात्।
आधिनासनदक्षिणागां गोपु एकस्य ऋत्विजोयावान्
भागः ततोद्विगुण आचार्यस्य भागइति केचित् तन्न
हेमालङ्कारिणः कार्याः पञ्चविंशतिऋत्विजः। कुण्ड-
लानि च हैमानि केयूरकटकानि च॥ तथाङ्गुरी
पवित्राणि वासांसि विविधानि च। प्रदद्यात्तु समं
सर्वमाचार्ये द्विगुणं पुनरिति मत्स्यपुराणवाक्यस्य
रूपनारायणे दर्शनेनास्य गवाविषयकत्वव्यवस्थितेः॥
अथैवन्दक्षयेदिति पदसहितस्यास्यैव वाक्यस्य नि-
बन्धान्तरे दर्शनादस्तु संशयइतिचेन्नैवं अस्यैव वा-
क्य स्य व्याख्यानरूपाया चूर्णिकायां भूपालरूपनारा

यण संवाददर्शनात् तथाहि ततः सौवर्णै· कटकैरङ्गुरी-पवित्रादिभिर्हेमालङ्कारिणं गुरुं ऋत्विजश्च कुर्यात् । वासांसि विविधानि च तेभ्यो दद्यात् एतच्चतुर्विंशतयेपि ऋत्विग्भ्यः समन्दातव्यं आचार्याय तु एकैक र्त्विग्देयाद्द्विगुणन्देयम् ॥ भूषणादिदानेद्वैगुण्य-दर्शनाद्दक्षिणागवीष्वपिद्वैगुण्यमाचार्यस्यास्त्वितिचे-न्न वाचनिकी हि व्यवस्था यावद्वचनमेव प्रसर ति ॥ यत्तु सर्वेषामर्द्धिनोमुख्याद्वितीयास्तु तदर्द्धि-नः । तृतीयिनस्तृतीयास्तु चतुर्थाश्चैकपादिन इति तावज्ज्योतिष्टोमे दक्षिणारूपे गोशते मनुना विभागउक्तः सइहाप्यस्त्विति तन्न सहि षोडशा नामृत्विजां संभवति अत्र तु पञ्चविंशति· सप्तदश त्रयोदश ऋत्विजइति सइहासंभव बाधित एवेति तस्मादत्र पञ्चविंशतावृत्विक्षु गवां शतस्य दक्षिणायाः समांशतैव समंस्यादश्रुतत्वादि-तिन्यायादबाधितत्वात् । एवमृत्विजां गवां वा ह्रासे सम्भवी विभागोद्रष्टव्यः ॥ ॐ भूः स्वाहा इदं भूरि ति वा इदमग्नय इति वा इदं न ममेति वा त्यागे कृते सति ऋत्विजाऽग्नावाहुतिस्त्याज्या यागानन्त रं होमावसरात् यागश्चोक्तत्यागरूप एव अतएवेद

मग्नय इति त्याग इति पद्धतयो ऽपीतितन्न दे-
वतोद्देश्यकोहि हविस्त्यागोयागः सएव त्यक्तस्य
हविषः प्रक्षेपेणावच्छिन्नोहोमः अत्रच यजमान-
स्त्यक्ता ऋत्विक् प्रक्षेप्ता तथा च स्मार्त्तेऽत्र वाप्यादि
कर्माणि श्रौतकर्मवन्न यजमानः प्रत्याहुति हविस्त्य
जति दुःशकत्वात् किंत्वधिवासनरात्रावेकदैव स-
र्वाणि हवींषि । तेन याजमानिकस्य त्यागस्य प्रागे
व जातत्वात् स्वाहाऽवसान एव होमउचितः अतएव
मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः । स्वाहाव-
साने जुहुयाद्ध्यायन् वै मन्त्रदेवतामिति स्मृतिः ।
अथ यदि यजमानः प्रागेवात्याक्षीदतएवास्वाम्या-
च्च ऋत्विगपि न त्यजति तदा इदमग्नयइति किम-
र्थम् यद्यस्ति तदा अदृष्टार्थम् ॥ तत्रैव त्यागइति
प्रयोगः किमर्थम् अदृष्टार्थोऽयं त्यागप्रतिरूपकः प्र-
योगइति बोधयितुमिति दिक् ॥ वस्तुतस्तु इदमग्नय
इत्यादिर्ऋत्विक्कर्तृकः प्रयोगोनिर्मूल एव हविस्त्याग
स्य यजमानकर्त्तृकत्वनियमात् तस्यच पूर्वमेव वृत्त
त्वात् इति ॥ यत्तु वारुणैर्मन्त्रैरिति स्मरणेऽपि न
मन्त्राणां मिलितानामाहुतौ करणत्वं किंतु प्रत्येकम्
तथा चैकेन मन्त्रेणाज्यहोमानन्तरं समिद्धोमः एवं

मन्त्रान्तरेऽपि तथैव पाठिकक्रमेण मन्त्रकरणका-
ज्यहोमसमिद्धोमयोः सिद्धेरिति तन्न एवं हि पशू
ननक्तीत्यत्राऽपि सप्तदशसु पशुष्वेकाञ्जनक्रिया ना-
न्वेति असम्भवात् किंतु प्रत्येकम् किंच येनक्रमेणाञ्ज
नं तेनैव क्रमेणाभ्युक्षणालम्भावपीति प्रावृत्तिकक्रमो
दाहरणं तदुक्तं तथाच तत्रापि पदार्थानुसमयो न
स्यात् अन्यथा पशुष्वञ्जनक्रियायाएकत्वे एकत्र
च क्रमासंभवेन येन क्रमेणाञ्जनं तेन क्रमेणाभ्युक्ष
णालम्भावपीति न्यायमीमांसे अपि व्याहन्येते
त्वदुक्ताज्यसमिदाहुतिवदेकस्यैवाञ्जनाभ्युक्षणाल
म्भा एवमपरस्यापि तथाच दर्शनद्वयविरोधः स्यात्
बहुत्वं तु एकस्यद्वयमिवि वदन्वीयते। किंच ऋग्वे
देऽष्टौवारुणामन्त्राः तत्राद्यैश्चतुर्भिश्चतुर्दशधा आ-
वृत्तैरन्तैश्चतुर्भिस्त्रयोदशधा आवृत्तैराज्यहोमः एव
मेव तदनु च समिद्धोमः एवमष्टोत्तरशतमाज्याहु-
तयः, ततोऽष्टोत्तरशतं समिदाहुतयः संभवन्ति त्वदु-
क्ते च क्रमे एकस्मिन्नेव मन्त्रे आज्यसमिधोराहु-
तिषु क्रियमाणासु सप्तविंशतावाहुतिषु समाविभा-
गासम्भवादाज्यसमिधोः संख्यावैषम्यं स्यात्। त्व-
न्मतेऽप्यविरोधएव विभागइत्यपि तव भ्रमबीजम्॥

अथर्ववेदेऽपि चतुर्मन्त्रके एवम् ॥ तस्मात्पाठिकक्र-
मानुरोधेन जुहुयाद्वारुणैर्मन्त्रैराज्यानि समिधस्त-
थेति पाठदर्शनात्सकलाज्यहोमानन्तरं सकलस-
मिद्धोमोवारुणः । अतएव चतुर्षु वेदेषु रूपनाराय-
णोप्येवमिति ॥ नन्वधिवासनयागः पूर्वाङ्गं चतु-
र्थीयागस्तूत्तराङ्गं तयोस्तु दक्षिणावचनबलात् उ-
त्सर्गस्तु प्रधानं तत्रैवार्थवादिकफलान्वयात् चतुर-
हव्यापीतु होमकलापोन प्रतिपत्तियागः तथा सति हि
त्यक्तद्रव्यापचारे तल्लोपः स्यात् तस्मात्परिशेषाद-
ङ्गयागएवासौ ॥ हन्त तथाऽपित्यक्तद्रव्यापचारेत-
ल्लोपएव, नह्यङ्गमनुष्ठानप्रयोजकं न हि पिण्डद्र-
व्यापचारे पिण्डाय पुनः पाकः किंतु पिण्डं विनैव
तत्र श्राद्धपूर्तिरिति ॥ अत्राहुः प्रतिपत्तियाग एवा
यम् । त्यक्तद्रव्यापचारेऽपि यत्पुनर्द्रव्यान्तरानुष्ठानं
तदत्यन्तसंयोगश्रुतिबलात् अङ्गत्वेऽप्यस्य समाधेः
साम्येऽप्यधिवासनरात्रौ सर्वेषामेव हविषां सहैव
तुल्यवत्त्यागे प्रतिपत्तियागत्वस्यैव सिद्धिरिति ॥
अत्रच शाकुनं सूक्तमृग्वेदीयमतस्तदीयशिक्षयैव प
ठनीयम् । अवतारिणी च गौः सचेलकण्ठा हेमशृ-
ङ्गी रूप्यखुरा कांस्योपदोहा वृषप्रजा विप्राय देया,

सचेलकण्ठां काञ्चनशृङ्गीं वृषभजां रूप्यखुरां कांस्यो पदोहां विप्राय दद्यादितरां वा शक्त्या दक्षिणामिति कल्पतरुलिखितबह्वृचपरिशिष्टात्। विप्रश्चायं सामगः, कनकालङ्कृतान्तत्र कृत्वा गामवतारयेत्। सामगाय च सा देया ब्राह्मणाय विशांपते इति मत्स्य पुराणात्। न चात्र कनकालङ्कृतामिति विशेषोपदेशाद्विशेषणान्तरत्यागः। अस्य तदुक्तसकलोपलक्षकत्वात् द्वयोरेकमूलकल्पनालाघवात्। नचाघारमाघारयतीतिवदशेषविशेषणस्थाने कनकालङ्कारविधिः। अनयोः प्रकृतिविकृतिभावाभावेन तदभावात्। वैकृतोहि विशेषोपदेशोऽतिदेशागतं प्राकृतं धर्मं क्वचिदन्यथयति, यथा शरमयं बर्हिर्भवतीत्यत्र। क्वचिल्लुम्पति, यथा पर्युक्ष्य जुहुयादित्यत्र। क्वचित्सर्वस्थाने तदेव विधत्ते, यथाऽऽघारमाघारयतीत्यत्रेति॥ अत्र च गोरवतारणानुमन्त्रणयोर्यजमानकर्तृकोमन्त्रपाठस्तत्र चामन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽप्यनधिकारोविशेषोपदेशविरहादिति॥ आथर्वणेन साम्नाच पुनर्मामित्यृचेति च। आपोहिष्ठेति मन्त्रेण क्षिप्त्वागत्य च मण्डपमितिवाक्ये॥ शन्नोदेवीरभिष्टये शन्नोभव-

, पीतये । शय्योँरभिस्रवन्तु नइत्यस्यामृचि गीत
ाथर्वणं साम आरण्यनाम्नि गानेऽस्ति तथा च तेन
ाम्ना पुनर्मामित्यृचा आपोहिष्ठेति तृचेन च स-
ुदितेन यथोक्तद्रव्यप्रक्षेपः कार्यः॥ अत्र च स्वगत
फलकामवत्पित्रादिगतफलकामोप्यधिकारीति न्याय
रत्नहरिनाथमहामहोपाध्यायाः ॥ अथाचारे आदौ
स्नानादिद्वैतनिर्णयः॥तत्र येन कल्पेन स्नानं कृतं त-
त्कल्पाम्नातमेव तर्पणमपि कार्यं तस्य तदेवारभ्याधी-
तत्वात्। तथा च नरसिंहपुराणीये स्नानकल्पे तर्पणा-
नभिधानादनारभ्याधीतविष्णुपुराणीयमेव तर्पणं।
तत्रार्तिव्याध्यादिवशादुष्णोदकादिना स्नानकरणे
स्नानाङ्गतर्पणस्याप्राप्तौ, तर्पणन्तु शुचिः कुर्यात्प्रत्य-
हं स्नातकोद्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च
यथाक्रममितिवचनात्प्राप्तस्य नित्यतर्पणस्यैव विष्णु-
पुराणोक्तविधिनानुष्ठानं तस्यानारभ्याधीतत्वेन-
स्वातन्त्र्येणैव प्रवृत्तेः। तच्च देवेभ्योऽञ्जलित्रयं
ऋषिभ्योऽञ्जलित्रयं ततः प्रजापतयएकोञ्ज-
लिरित्येवं रूपं। त्रिरपः प्रीणनार्थाय देवानामपवर्ज-
येत्। ऋषीणाञ्च यथान्यायं सकृच्चैव प्रजापतेरिति
विष्णुपुराणात् ॥ नचेदं देवतर्पणेष्वन्यतः प्राप्तेष्वञ्ज

लित्रित्वरूपगुणविधायकमिति वाच्यं पृथग्विधा-
वसन्निधानाद्गुणविधानासम्भवात् तच्च संध्या
वन्दनस्याप्राप्तौ स्नाननैरन्तर्येणैव चन्द्रग्रहादौ कर्त्त
व्यं। एवं सायं सूर्यग्रासेपि तत्सन्ध्यावन्दनस्य स्नान
तर्पणयोर्मध्येऽनुपदेशात् । प्रातर्मध्याह्ने च स्नानतर्प
णयोः प्रधानाङ्गयोर्मध्ये एव संध्यावन्दनं तथैव का-
त्यायनादिना तत्प्रयोगाभिधानात् । वाप्यादौ पर
कीये स्नानतर्पणयोः करणपक्षे उभयप्राप्तस्य पिण्डो
द्धारस्य स्नानात्प्राक् तन्त्रेणैवानुष्ठानम् । अङ्गानां
तन्त्रोपदेशात् प्रयोगैक्यात् तीर्थविसर्जनपर्यन्तं
स्नानत्वस्मरणात् । एवं तर्पणस्य स्नानाङ्गतया
प्राप्तौ तथाहनि नित्यविधिना च प्राप्तौ अङ्गतर्पणे
नोदयोत्तरकृतेन प्रसङ्गान्नित्यतर्पणस्यापि सिद्धिः
कालभेदादेः प्रसङ्गविरोधिनोऽभावात् । तर्पणन्तु
जीवत्पितृकाणां कातीयकल्पवतां यमतर्पणान्तमेव
कार्यं यमतर्पणान्तमभिधाय जीवत्पितृकोप्येता
नन्याँश्चेतर इति कात्यायनवचनात् ॥ अन्यान्
स्वपित्रादीन् इतरः प्रमीतपितृकइत्यर्थः ॥ यमतर्प-
णन्तु, एकैकस्य तिलैर्मिश्राँस्त्रीँस्त्रीन्दद्याज्जलाञ्ज-
लीन् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यतीति

यमवचनाद्यद्यपि काम्यं तत एव च नित्यापेक्षया विलम्बिताधिकारिकं तथापि कातीयप्रयोगविधि बलेन कव्यवालादिस्वपित्रादितर्पणयोर्नित्ययोर्मध्ये विधेयम् । कव्यवालश्च लान्तोदेवता कव्यवालं नलं सोममिति कामधेनुदर्शनात् ॥ यत्तु हव्यवाहनोदेवतानां कव्यवाहनः पितॄणामिति श्रुतिदर्शनात्कव्यवालविशिष्टोऽनलः कव्यवाडनल एकैवदेवतेति तन्न कव्यवालादयोहिदिव्ययमाः । कव्यवाडनलश्चतावदग्निः तस्यैव पितॄणां कव्यवाहनत्वात् तस्माच्छ्रुतिर्भिन्नविषयतया न दिव्ययमस्पर्शिनी ॥ तर्पणन्तु पुरुषषट्कस्त्रीषट्कयोर्नित्यमिति प्रातः स्नाने तदेवाङ्गतया कर्त्तव्यमिति। यत्तु काम्यत्वातः शृणुष्व मे इत्युपक्रम्य मात्रे प्रमात्रे तन्मात्रे इत्याद्यभिधानान्मातॄणान्तर्पणङ्काम्यमिति तन्न त्रीन् पितृतः त्रीन् मातृतः पत्नीश्चेति गोभिलदर्शनान्नित्यत्वे तत्काम्यत्वाभिधानस्य फलार्थत्वात्। रत्नाकरादयोऽप्येवम् ॥ स्नानशाट्याश्च मृत्त्रयेण प्रक्षालनं वस्त्रनिष्पीडनोदकदानाव्यवहितप्रागेव अपूर्वरूपोपकारजनकत्वे सत्यसाधारणाङ्गत्वात् ॥ तस्याः क्षालनमपसव्येनैव उत्सर्गतोङ्गानां प्रधानरीत्यन्वया-

त् ॥ तर्पणे याज्ञवल्क्यः। आवाह्य पूर्ववन्मन्त्रैरा स्तीर्य च कुशाञ्छुचीन् । प्रागग्रेषु सुरान्सम्यग्दक्षिणाग्रेषु वै पितॄन ॥ तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान्पितृगणाँ स्तथा ॥ अस्यार्थः । मन्त्रैरावाह्य शुचीन् कुशाना- स्तीर्य प्रागग्रेषु कुशेषु तल्लिङ्गैर्मन्त्रैः पितॄन् तर्पयेत् पितृतर्पणेतु प्रयोगापेक्षायामाह पूर्ववद्देववदित्यर्थः तेनात्रापि पिता तृप्यतामिति सिध्यतीति प्रदीपः ॥ जलत्यागस्तु माध्यन्दिनीयानां स्थलस्थानां कुशे- ष्वेव लिखितवाक्यात् ॥ अत्र देवावाहने विश्वेदेवा- सआगत, विश्वेदेवाः शृणुतेममिति मन्त्रौ ॥ पि- त्राद्यावाहने तु उशन्तस्त्वा निधीमहीति, आयन्तुनः पितर इति च मन्त्रौ इति कातीय कल्पे ॥ कल्पान्तरे तु तदुक्तैव रीतिः । तर्पण जलन्तु देवतीर्थस्पार्शि देवानां पितृतीर्थस्पार्शि पितॄ- णान्देयं। देवानां वामान्वारब्धो दक्षिणकरः, पितॄ- णामञ्जलिः पात्रतर्पणपक्षेपि नैतयोरपवादः अ- ञ्जलिपात्रयोर्विकल्पाश्रवणात् । वाक्येतु अस्म- त्पदं प्रयोज्यमिति कल्पतरुः । नेतिपारिजातः । त- त्रपारिजाते पदिन्याय आश्रयः। कल्पतरौतु शब्दा ध्याहारनयस्तथा । ( अत्र ) एतपितर आयन्तुनः

पितर इति मन्त्रयोर्दर्शनादद्वयमपि प्रामाणिकं न्यायमतानुसारीतुकल्पतरुरेवेति । मन्त्रेण तु तर्पणे क्रियमाणे देष्मेत्यन्त एव मातामहादितर्पणमन्त्रः तथैव सर्वानुक्रमण्यां व्यवच्छेदनात् । मातामहादि तर्पणेषु तु प्रतिपुरुषं मन्त्रपाठः । मन्त्रैस्तु देयमुदकं पितॄणां प्रीतिवर्द्धनैरित्यनेन तर्पणे मन्त्रस्य करणत्वप्रतीतेः । वाक्येन च व्यवधानेऽनङ्गव्यवायात् मन्त्रावृत्तेरावश्यकत्वात् । एवञ्च मातामहाय मन्त्र वाक्याभ्यामञ्जलित्रयं एवं प्रमातामहाय एवं वृद्ध प्रमातामहायापि ॥ प्रत्यञ्जलि तु न वाक्यं सकृत्पठितेनैव वाक्येनाञ्जलित्रयदानसिद्धेः । नतु प्रथमाञ्जलिदानसमये द्वितीयतृतीयाञ्जल्योर्भविष्यत्तया नेदमानिर्देशो नवा स्वधाशब्देन त्यागः सम्भवति उद्धृतोदकेन तर्पणपक्षे अञ्जल्यसिद्धेः अनुद्धृतोदकपक्षे तु भविष्यदञ्जल्योर्जले आशयस्थे अनुपात्ततया औपादानिकस्वत्वस्याप्यसिद्धेरिति मैवं द्रव्यवत्तया नाधिकारिता किन्तुद्रव्ययोग्यतया अतएव भविष्यन्तीनामपि समिधां प्रागेव त्यागः व्यवहितस्यापि फलस्य धात्वर्थावच्छदेकत्वम् ॥ चन्द्रोप्येवम् ॥ नतु दानेष्वेवमस्तु तथाचा

विद्यमानमपि दीयेतेति चेन्न तर्ह्यदानमफलं यच्चद-त्वानुशोचतीत्यादिना विशेषवचनेन तादृशदान निषेधात् तर्हि त्यागकालेऽदानं सम्प्रदानस्वत्वानुत्प-त्तिः निरन्तरयोरेव स्वस्वत्वध्वंसपरस्वत्वोत्पत्योरुप-लक्षणीभूय ददात्यर्थावच्छेदकत्वाभ्युपगमात् इद-मस्तु बौद्धसन्निधिना मानसप्रत्यक्षीभावेनात्र प्र-योगः अतएव पूरकपिण्डे बहूनामपि तिलतोयाञ्ज-लीनां सकृदेवदानामिति । तर्पणन्तु न दानंकिन्तुया गः श्राद्धवत्। देवतोद्देश्यकहविस्त्यागत्वात्। पितृतर्प-णे तु दक्षिणहस्तानामिकायां कुशत्रयसुवर्णरजता-न्यपि धार्याणि ॥ जपे होमे तथा दाने स्वाध्याये पि-तृतर्पणे । अशून्यन्तु करंकुर्यात्सुवर्णरजतैः कुशैरिति-वचनात् ॥ अत्र सुवर्णधारणं तावद्दक्षिणहस्ताना-मिकायां अनामिकायान्तद्धार्यं दक्षिणस्य करस्य चे-ति हेमधारणप्रकरणस्थदेवीपुराणवचनात् । रज-तं कुशत्रय धारणमपि तत्रैव तत्संदंशात् । तर्जन्यां रजतं धार्यमिति तु प्रवादोनिर्मूलएव ॥ एकसुवर्ण धारणेपि बहुसुवर्णधारणं सुवर्णत्वजातेर्दधित्ववद्द्व्य णुकादारभ्य प्रवृत्तेः ॥ रजतेप्येवम् ॥ हन्तैवं सुवर्णेबहु-वचनं व्यर्थमेकसुवर्णधारणेप्यर्थादेव बहुसुवर्णधा-

रणासिद्धेरितिचेत् तथापि बहुसुवर्णधारणस्य कर्माङ्ग-
त्वमिति विवेचयितुं बहुवचनारम्भात् ॥ अथैवं बहु-
त्वस्य प्रत्येकमन्वये वाक्यभेदः स्यादतएवसाहित्य
लक्षणांब्रूमइतिचेद् गुरुमतमिदं नतुभट्टमतमन्वय
प्रयोजकरूपवत्त्वं योग्यतेति तैरनुपगमात् ॥ कुशै-
रितिबहुवचनन्तु कपिञ्जलन्यायात् त्रित्वपर्यव-
सितम् ॥ सन्ध्यावन्दने चादावघमर्षणसूक्तं
तच्च माध्यन्दिनीयानां नास्त्येव ऋग्वेदे तैत्तिरीय
के चास्ति तत्र तैत्तिरीयकस्य याज्ञवल्क्योद्गीर्णे
तया माध्यन्दिनीयैस्तदुक्तं न परिगृह्यते किन्तु ऋ-
ग्वेदोक्तमेवाघमर्षणसूक्तमादेयं तत्र रात्रीशब्दः
समुद्रोअर्णव इत्यत्राकारोभिन्नः अकल्पयदित्यत्रछेदः
तैत्तिरीयके तु ह्रस्वोरात्रिशब्दः समुद्रोऽर्णव इत्यत्राका
रप्रश्लेषः अकल्पयद्दिवामित्यत्रसन्धिः ॥ उद्वयं उ-
दुत्यं चित्रं तच्चक्षुरिति चतुर्णां सर्वानुक्रमण्यां ऋ-
ष्यादयः ॥ तथाहि उद्वयं सौरी अनुष्टुप् प्रस्कण्वस्य,
उदुत्यं प्रस्कण्वः सौरीगायत्री, चित्रं कुत्सआङ्गिरसः
त्रैष्टुभंसौरी, तच्चक्षुः पुरउष्णिक सौरी । आद्याया-
जलादुत्क्रमणे मध्ययोर्दाक्षिणहोमे चतुर्थ्यामहावी-
रशान्तिकरणे विनियोगः । तेन उद्वयमित्यस्य प्र-

स्कण्वऋषिरनुष्टुप्छन्दः सूर्योदेवता जलादुत्क्रमणे विनियोगः। उदुत्यमित्यस्य प्रस्कण्वऋषिर्गायत्रीछन्दः सूर्योदेवता दाक्षिणहोमे विनियोगः । चित्रमित्यस्य कुत्सआङ्गिरसऋषिस्त्रिष्टुप्छन्दः सूर्योदेवता दाक्षिण होमेविनियोगः। तच्चक्षुरित्यस्य (दध्यङ्ङाथर्वणऋषिः) पुरउष्णिक्छन्दः सूर्योदेवता महावीरशान्तिकरणे विनियोगः ॥ गायत्र्यस्येकपदीत्यस्य परोरजसइत्यनन्तरं असावदोमा प्रापदितिशेषः । तदुक्तं शतपथे, तस्याउपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदासि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदोमा प्रापदिति ॥ अत्र चेतिना व्यवच्छेदाद् गायत्र्यसीत्युपक्रम्य प्रापदन्तउपस्थाने मन्त्रइति शङ्कराचार्यभास्कराचार्ययोर्व्याख्या ॥ यद्यपि बौधायनसूत्रे परोरजस इत्यन्त एवमन्त्रः श्रूयते तथापि तत्सूत्रस्य कल्पतरुकारादिभिरलिखनेन निर्मूलत्वात् समूलत्वे वा बौधायनशाखीयपरत्वात् शङ्कराचार्यविरोधाच्च तन्मात्रस्य न माध्यन्दिनीयानां विनियोगः किन्तुशतपथोक्तस्यैव । यत्तु गायत्र्यस्येकपद्याद्यैरुपस्थाय ततोजपेत्। उपस्थाय तुरीयेण तेनैव च विसर्जनम्। अष्टाक्षरं पदन्तत्तुपरोरजसेसावदोमिति मन्त्रप्रकाशदर्श-

नात् असावदोमित्यन्तोमन्त्रइतितन्न शतपथश्रुति-
बाधात् गायत्रीजपानन्तरन्तु विभ्राडित्यनुवाक पुरु-
षसूक्तशिवसङ्कल्पमण्डलब्राह्मणैश्चतुर्भिरुपस्थानं का
त्यायनेनोक्तं तच्च काम्यं विभ्राडादीच्छया जपेदिति व
चनात् ॥ देवपूजा तु नित्या ॥ शिवम्भास्करमग्नि-
ञ्च केशवं कौशिकीमपि । मनसानर्च्चयन्याति देव-
लोकादधोगतिमिति वचनात् एतान् मनसाप्यनर्च
यन्नित्यन्वयः । अत्र च शिवपूजा सर्वदोदङ्मुखेनैव श
ङ्कराराधनं तद्भक्तसदा कुर्यादुदङ्मुखइतिवचनात् देवा
न्तरपूजा पूर्वाह्णेप्राङ्मुखेन सायं पश्चिमाभिमुखेन का
र्या रात्रावुत्तराभिमुखेन कार्या प्राक्पश्चिमोदगास्यश्च
प्रातः सायं निशास्वितिवचनादिति ॥ वैश्वदेवहोमे तु
जले क्रियमाणे पर्युक्षणं न कार्यं वैश्वदेवादन्नादुद्धृत्य
पर्युक्ष्य स्वाहाकारैर्जुहुयादित्यनेन तावत्पर्युक्षणं वि-
हितं तच्च होमसामान्यधर्मतयैव प्राप्यते तथाच एष
एव विधिर्यत्र क्वचिद्धोम इतिसामान्यतः प्राप्तेतिक
र्त्तव्यताकलापस्य निरासार्थं वैश्वदेवहोमे पर्युक्षणमा-
त्रमुपात्तं सचेतिकर्त्तव्यताकलापः परिसमुह्योपलि
प्योल्लिख्येत्यादिना कात्यायनवचनेन वह्नावेव प्राप्तइ
तिचेत् सकलस्थानीयत्वेन पर्युक्षणमपिवह्नावेव सि
ध्यति ॥ इदं ब्रह्मणे इत्यादिरूपस्त्याग इहापि तस्यैव

यागत्वात् यागस्यैव प्रक्षेपफलकस्य होमत्वात् तथा च त्यागानन्तरं प्रक्षेपः तस्यैव हविरेचनकालत्वेनोक्तेरित्येके तन्न स्वाहाकारैरिति पुनर्विशेषोपदेशेन त्यागस्यापि वारणात् जुहुयादित्यनेन होमविधेश्च ॥ देवामनुष्या इति पञ्चश्लोक्या पठितया एक एव बलिर्देयः पञ्चश्लोकीम्पठित्वा इत्युच्चार्य नरो दद्यादिति विष्णुपुराणेऽभिधानात् इतिना चोपस्थितायाः पञ्चश्लोक्याएव प्रत्यवमर्षौचित्यात् एकैकश्लोकस्य एकैकान्वयस्य वा प्रत्यवमर्षे आवृत्तिलक्षणोवाक्यभेदः स्यात् एतेन प्रतिश्लोकं बलिदानं हरिहरोक्तमपास्तं श्रीदत्ताह्निकवर्द्धमानाह्निके अप्येवम् । काकबलिश्लोके तु याम्या इति पाठोयुक्तः पौर्णमास्यां मघायोगे वायसाः पञ्च जज्ञिरे । इन्द्राच्च वरुणाद्वायोर्यमादथ च निर्ऋतेरिति काकोत्पत्तौ श्रवणात् । सोमात्तु काकोत्पत्तेः क्वचिदप्यश्रवणादिति ॥ यद्यपि यक्ष्मबल्यनन्तरमेवोद्धृत्याग्रं ब्राह्मणायावनेज्यदद्याद्धन्तत इति पारस्करे श्रूयते तथापि तद्विभक्तजीवत्पितृकपरमिति मन्तव्यं प्रमीतपितृकेण तु नित्यश्राद्धानन्तरं हन्तकारः करणीयः पितृभ्योथमनुष्येभ्यो दद्यादहरहर्द्विज इति क्रमविधायकच्छन्दोगपरिशिष्टात् हन्तकारश्चातिथे

रनावश्यकतया ब्राह्मणान्तरायापि देयः अहरहर्ब्राह्म-
णेभ्योदद्यादामूलफलशाकेभ्योथैनं मनुष्ययज्ञं समा
प्नोतीपि बौधायनवचनात् अहरहर्दद्यादोदपात्रात्त-
थैतं मनुष्ययज्ञं समाप्नोतीति शतपथाच्च ॥ अथ पितृय
ज्ञः ॥ तत्र छन्दोगपरिशिष्टत् । पितृयज्ञस्तुतर्पणम् तथा
श्राद्धं वा पितृयज्ञः स्यात्पित्र्योबलिरथापिवा ॥ श्राद्धं
नित्यश्राद्धम् तदाह । अप्येकमाशयेद्विप्रं पितृयज्ञार्थ
सिद्धये । अदैवं नास्तिचेदन्योभोक्ताभोज्यमथापि-
वा ॥ बहूनामन्नानां विप्राणाञ्चसम्भवे बहून् तदसंभवे
एकमपि विप्रंभोजयेदित्यर्थः अस्याप्यसम्भवे आह
अप्युद्धृत्य यथाशक्ति किञ्चिदन्नंयथाविधि । पितृ-
भ्योथमनुभ्यो दद्यादहरहर्द्विजः ॥ यथाविधीति व्या-
चष्टे पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत् । ह
न्तकारम्मनुष्येभ्य स्तदन्ते निनयेदपः ॥ एवञ्चेदम
न्नंपितृभ्यः स्वधेतिलघुर्नित्यश्राद्धप्रयोग इतिकेचि
त् हन्तकारप्रयोगस्तु व्यक्तएव मिलितदेवतात्वस्य
श्राद्धकल्पादिप्रामाणिकनिबन्धेषु विस्तरेण खण्ड-
नात् । अत्रापि प्रत्येकदेवतात्वमेव अमुकामुकगो
त्रैतत्तुभ्यमन्नं स्वधानमइति चात्रबाधकं । अत
एवामावास्यायां पितृभ्योदद्यादिति श्रवणेपि न मि-
लितदेवतात्वम् न चात्र श्रुतवाक्यत्यागोऽनुचितः

त्वं मयात्रनिमन्त्रित इति वाक्यस्य श्रुतस्यापि स-
र्वैरेव निबन्धृभिस्त्यागलिखनादिति संप्रदायः ।
दक्षिणादानं त्वत्र सपात्रकपक्षेपि नास्ति । नित्यश्रा
द्धमदैवं स्यादर्घपिण्डविवर्जितम् । दक्षिणारहितं
त्वेतद्दातृभोक्तृव्रतोज्झितमिति काशीखण्डात् । यत्तु
नित्यश्राद्धमदैवं स्याद्दक्षिणापिण्डवर्जितमितिवचने
दक्षिणा दातव्या पिण्डवर्जितं श्राद्धं कर्त्तव्यमिति-
व्याख्यानं तदसत् अध्याहारापत्तेः सहिवाक्यभेदप्रभे-
दः सचनाश्रयणीयः सम्भवत्येकवाक्यत्वे वाक्यभेदो
न युज्यत इति वचनान्न्यायाच्च गोग्रासस्तु नित्यः
सौरभेय्य इत्युपक्रम्य दद्यादनेन मन्त्रेण गवां ग्रासं
सदैव हीति वाक्ये सदाशब्दश्रवणादिति प्राञ्चः ॥
एतत्तु सर्वमन्तरीपे न कार्यं गोशतावस्थित्यर्हेतु का
र्यमितिवृद्धाः ॥ विवादे तु कात्यायनः ॥ ऊढया कन्य-
या वापि पत्युः पितृगृहेपि वा । भ्रातुः सकाशात्पित्रो-
र्वा लब्धं सौदायिकं स्मृतम् ॥ सौदायिकं धनं प्रा-
प्य स्त्रीणां स्वातन्त्र्यमिष्यते । यस्मात्तदानृशंस्या
र्थं न्तैर्दत्तं तत्प्रजीवनम् ॥ सौदायिके सदा स्त्रीणां
स्वातन्त्र्यं परिकीर्तितम् । विक्रये चैव दाने च यथेष्टं
स्थावरेष्वपि ॥ पत्युर्गृह इति संबन्धः । भ्रातुः पि-
त्रोर्वेत्युपलक्षणं तेनान्येभ्योपि स्वमातापितृकुले-

भ्योयल्लब्धं धनं तत्सौदायिकं तत्र स्थावरेष्वपि स्त्रियादाने विक्रये च स्वातन्त्र्यं ॥ नारदः ॥ भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेपि तत्। यथा कामं समश्नीयाद्दद्याद्वास्थावराद्दते॥ भर्तृदत्ते तु स्थावरे स्त्रीधनत्वे सौदायिकत्वे च सत्यपि तस्यादानादौ न स्वातन्त्र्यं एतद्वचनबलादेव॥ कात्यायनः॥ भर्तृदायंमृतेपत्यौ विन्यसेत्स्त्री यथेष्टतः। विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेन्यथा॥ अपुत्रा शयनं भर्तुः पालयन्ती गुरौ स्थिता। भुञ्जीतामरणात् क्षान्ता दायादाऊर्द्ध्वमाप्नुयुः॥ भर्तुर्दायो भर्तृदायः सच द्वेधा मृते भर्तरि संक्रान्तोजीवति च भर्त्तरि तदनिषेधादिना स्त्रीस्त्रीभूतः। आद्योपि द्वेधा जङ्गमःस्थावरश्च। तत्राद्ये प्रथमश्लोकप्रथमार्द्धेन व्यवस्था। द्वितीये तु द्वितीयश्लोकद्वितीयार्द्धेन, तेन भर्तुः स्थावरं स्वसंक्रान्तं स्त्री भुञ्जीत नतु दद्यात् विक्रीणीत वेत्यर्थः। जीवति त्वाह विद्यमाने त्विति। जीवति पत्यौ तद्धनव्यये तदाज्ञां पालयन्ती तद्धनरक्षां कुर्यादिति प्रकाशः॥ भर्तृदायो भर्तृदत्तं-स्थावरं जङ्गमञ्च तत्रैव चेयं व्यवस्था सौदायिकप्रकरणाम्नातत्वात् संक्रान्तस्यासौदायिकत्वादिति हलायुधपारिजातौ तन्न एवंहि स्त्रीसंक्रान्ते व्यवस्थायाअनभिधानात्तदाकांक्षाअनिवृत्तेन स्यात् साचाव

श्यनिरस्येति प्रकाशव्याख्यैव श्रेयसीतिरत्नाकरः। एवञ्च गृहपतिपुत्रद्धाराशपि मातृसंक्रान्तेऽसौदायिकतया आकांक्षातौल्याद्वाक्यमिदं जागर्त्ति भर्तृदायत्वञ्चतस्यपरम्परासंबन्धादिति। किञ्च पतिस्थावरस्य पुत्रद्धाराशपि स्त्रीसंक्रान्तस्य पतिस्थावरसमानन्यायतयैवंन्यायमूलाश्चस्मृतयएताः अतएव युक्तिहीनविचारेतु धर्महानिः प्रजायत इति कात्यायनोप्याह। पारिजातहलायुधमतेऽपि सौदायिकेपि स्थावरे भर्तृदत्ते स्त्रियादानादौ न स्वातन्त्र्यमित्येतद्वचनबलादपि सिद्धे संक्रान्ते स्थावरे सुतरामस्वातन्त्र्यमसौदायिकत्वादित्यायाति ॥ अथ वृद्धिः ॥ हारीतः ॥ पुराणपञ्चविंशत्यां मासेनाष्टपणाद्वृद्धिः, एवं सद्भिमासैश्चतुर्भिर्वर्षैर्द्धिपर्यागतं संतिष्ठते । एषाधर्म्यावृद्धिर्नानयाधर्माच्च्यवते ॥ गोतमः ॥ चिरावस्थाने द्वैगुण्यं प्रयोगस्य ॥ मनुः ॥ कुसीदवृद्धिर्द्वैगुण्यं नात्येतिसकृदाहृता ॥ कात्यायनः । मणिमुक्ताप्रवालानां सुवर्णरजतस्यच । तिष्ठति द्विगुणा वृद्धिः फालकैटविकस्य च ॥ इत्यादिनानामुनिवचनस्वरसात् ऋणे द्विगुणैववृद्धिरिति तन्न कारितायां व्यवस्थानुरोधिन्यामेतदसम्भवात् यत्रहि यावतोऽब्दान् मूलं स्थास्यति तावतामब्दनां वृद्धिन्दास्यामीति ऋ

णिकेन स्वरसतो व्यवस्थाक्रियते तत्र तावदब्दीया द्वि गुणाधिकापि वृद्धिर्दातव्या सा तु कारितेत्यादिवचनबलेन देयत्वेन सिद्धा एवं शिखावृद्धेरपि द्विगुणाधिकायादेयत्वमेव,शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्ततइत्यादिस्वरसात् एवम् आधिभोगरूपापि वृद्धिर्द्विगुणाधिका देयैव ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु। आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयतइतिवचनात् । एवं कायिकापि द्विगुणाधिका देयैव शिखावृद्धिं कायिकाञ्च भोगलाभन्तथैव च। धनी तावत्समादद्याद्यावन्मूलं न शोधितमितिवचनात् । इयञ्च कायिका शिखावृद्धिभोगवृद्धिभ्यां भिन्ना अत्रैव वाक्ये पृथगुपादानात्। न च कायाविरोधिनी शश्वत्पणार्द्धाद्या तु कायिकेतिवचनात् सा शिखावृद्धिरेवेति वाच्यम् शिखावृद्धितः पृथगुपादानानुपपत्तेः। ननु तर्हीयं मासिकी वा स्याद्वार्षिकी वा स्यात् तत्कथं पणार्धादि रूपा भवेत् नहीयं वृद्धिः काकिनीद्वयरूपा भवितुर्महतीति चेन्न पणशब्दस्य मूलधनवाचित्वात् तेन, मूलार्द्धं मूलपादोवा या वृद्धिः सैवेयमुक्ता अत्रैव पणवाद्येति हलायुधे पाठः पणोमूलं तेनाब्दशतपर्यन्तमपि मूलस्थितौ सत्यां सा वृद्धिर्ग्राह्येति तत्रैव व्याख्यातम् तथा च कायि-

कायां द्विगुणाधिकाऽपि वृद्धिर्ग्राह्येति सिद्धम् । एवञ्च कुत्र वृद्धेर्द्विगुणाधिकत्वनिषेधः मणिमुक्ताप्रवालादाविति गृहाण । तथा च मण्यादौ मण्यादिवृद्ध्यैव प्रयुक्ते मण्यादिद्वयमेव ग्राह्यम् । तथा च यत्र मणिर्मुक्ता प्रवालः सुवर्णं रजतं वा मण्यादि वृद्ध्या प्रयुज्यते तत्र मण्यादिकमेव वृद्धिर्भवति तत्रैव चाकृतविशेषव्यवस्थाद्वैगुण्यनियमः । एवंच रक्तिकाशतमिते मणिमुक्तादौ हिरण्ये रजते वा ब्राह्मणादौ वृद्ध्या प्रयुक्ते क्रमेण ब्राह्मणादौ मासि मासि रक्तिकाद्वयं त्रयं वेति । द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् । मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशइत्यादिमनुवचनेनोक्ता वृद्धिः । अत्र च द्वैगुण्यनियमएव । अतएव मनुराह कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृतेति । कायिकाशिखावृद्ध्यादिभोगव्यतिरिक्ता कुसीदवृद्धिः सकृद्गृह्यमाणा द्वैगुण्यं नातिक्रामतीत्यर्थः कारिता तु यथाव्यवस्थं भवतीति ॥

अथ क्रियाद्वैतनिर्णयः । तत्र मनुः । नत्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् । नचाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ॥ कालसंरोधश्चिरकालावस्थानन्तेन हेतुना आधेर्निसर्गोदानन्तदधिकधने-

ष्वाधीकरणं वा तदुभयमुत्तमर्णेन कृतं निवर्त्तते तस्यैव पूर्वार्द्धे कर्तृत्वेनोपस्थितेः । यत्तु अनिमुक्तस्य चैवाधेर्न दानं न च विक्रयइतिवचनादधमर्णकृतं दानादि न सिद्ध्यतीति तन्न वचनस्य निर्मूलत्वात् । कालसंरोधोऽवधिकालनियमनन्तेन तदभ्यन्तरेऽधमर्णकृतं दानादि न सिद्ध्यतीत्यन्ये । एवञ्च यत्राधौ कालेन नियमितस्तत्र तन्मतेऽप्यधमर्णकृतोदानादिर्निराबाधएव । यद्यमुककाले धनं न निस्तरसि तदाऽऽधिं विक्रीय मया स्वधनं गृह्यत इति व्यवस्था यत्र नाभूत्तत्रोत्तमकृतआधिविक्रयोन सिद्ध्यतीति लक्ष्मीधराद्यनुमता मनुवचनव्याख्येति । न्यासं कृत्वा परत्राधिं कृत्वा वाऽऽधिं करोति यः । विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरेति रत्नाकरस्मृतिसारादिलिखितवचनविरोधाच्च । अतएव गोचर्ममात्रामधिकां वा भुवमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छति स वध्यऊना चेत् षोड़श सुवर्णान् दण्ड्य इति विष्णुसूत्रे प्रयच्छतीति सामान्यमुखमपि पदमुत्तराधिर्न सिद्ध्यतीत्याधिरूपविशेषपरतया पारिजातरत्नाकरस्मृतिसारादौ व्याख्यातम् । अतएव सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया । आधौ प्रतिग्रहे क्रीते पू-

वैव बलवत्तरेतिवाक्ये पूर्वसजातीयोत्तरक्रिया दुर्बला तेनोत्तरोबन्धः पूर्वबन्धाद्दुर्बलइति सिद्ध्यतीति। यत्तु ययोर्निःक्षिप्तआधिस्तौ विवदेतां यदा नरौ। यस्य भुक्तिर्जयस्तस्य बलात्कारं विना भवेत्॥ तुल्यकालोपभोगो चेद्भागोऽपि समको भवेत्। प्रदाने विक्रये चैव विधिरेषप्रकीर्त्तितइति विष्णुवचनन्तत्राप्याध्योः पौर्वापर्यसन्देहे बलात्कारविनाकृतोयस्य भोगस्तस्याधिः सिद्ध्यतीति प्रथमश्लोकार्थः। भोगस्याप्युभयीयस्य तुल्यत्वे सोऽपि न नियामकइत्युत्तरखण्डार्थः। अमुमेवार्थं प्रदानविक्रययोः पौर्वापर्यसन्देहे यथोक्तभोगोनिर्णायकः तस्यापि तौल्ये निर्णायकान्तरमनुसरणीयमित्यतिदिशति प्रदाने विक्रये चेति। तदयं संक्षेपः काचित्क्रिया पूर्वस्वामिनः स्वत्वध्वंसिका काचिच्च तदीययथेष्टविनियोगप्रतिरोधिका तत्राद्या दानविक्रयरूपा द्वितीया तु गोप्याधिरूपा। अत्र च स्वत्वध्वंसकक्रिययोः सन्निपाते आद्यैव बलवती आध्योरपि सन्निपातएवम्। स्वत्वध्वंसिकायास्तु स्वत्वाध्वंसिकया सह सन्निपाते प्रथमा चरमा वा स्वत्वध्वंसिकैव बलवतीति वर्त्तुलार्थः॥

अथ व्यवहारद्वैतनिर्णयः। तत्र विचारस्ताव-

द्वादकथाप्रतिरूपकः । छलं निरस्य भूतेन व्यवहारं नयेन्नृपः । भूतं तत्त्वार्थसम्बद्धं प्रमादाभिहितं छलमित्यादिस्वरसात् । न तु विजिगीषुकथाप्रतिरूपकः अधिकान् शातयेदर्थानित्यादिस्वरसात् विजिगीषुकथायां ह्यधिकादिपाते भङ्गएव । एतेन द्वितीयस्थापनाहीनतया वितण्डैवेयं कथेति प्रास्तम् । ममेयं भूः क्रमागतत्वादिति स्थापिते ममैवेयं भूः क्रमागतत्वादिति समबलकारणोत्तरे तथा ममेयं भूर्विंशतिमब्दान् भुज्यमानत्वादिति स्थापिते ममैवेयं भूः पञ्चाङ्गभोगविषयत्वादित्यधिकबलकारणोत्तरे तथाऽनयोरेव व्यत्ययेन हीनबलकारणोत्तरे प्रतिस्थापनायाअपि दर्शनात् । यत्तु त्वं मह्यं शतस्यसुवर्णानान्धारयेः मत्तऋणत्वेन गृहीततावत्सुवर्णकत्वादिति स्थापिते यत्परिशोधनमुत्तरं तदाशयस्थस्योक्तस्य वाऽपरिशोधितत्वरूपहेतुविशेषणस्यासिद्धिबोधकं कारणोत्तरं तत्र प्रतिस्थापना नास्तीति सा वितण्डा स्यादिति तन्न एवन्तर्हि सत्प्रतिपक्षेणोत्तरे सत्प्रतिपक्षस्य दोषमात्ररूपत्वे जल्पोऽपि वितण्डा स्यात् दूषणमकृत्वा तु साधनकरणेऽप्राप्तकालञ्च स्यादिति । न च सत्प्रतिपक्षे जल्पोऽपि वितण्डैवेतिवाच्यम् । अपसिद्धान्तात् । तस्मात्सत्प्र-

तिपक्षे द्वितीयानुमानम्पूर्वानुमाने हेत्वाभासोद्भाव-
नम्प्रतिस्थापना च तन्त्रेणैव निर्वहति । तथा परि
शोधितत्वादित्युत्तरमपि स्थापनानुमानेऽसिद्ध्युद्भा-
वकम् । तथा नाहं त्वद्भाषिताभियोगवान् परिशो-
धितर्णकत्वादित्युभयरूपमस्तु वैयर्थ्यान्तु नैतावत्प-
र्यन्तं तत्क्रियते नतूत्तरयितुराशयेऽपि नैतद्विपरिव-
र्त्ततइति । किञ्च हृदिस्थस्याऽप्यपरिशोधितत्वरूप-
हेतुविशेषणस्यासिद्ध्युद्भावकं परिशोधितत्वरूप-
कारणोत्तरमिति भवदेवभट्टादिभिरुक्तम् । तच्च वि-
चारस्य वितण्डात्वे न घटते । किञ्चानुक्तोपालम्भे
निरनुयोज्यानुयोगः स्यात् । तत्त्वनिर्णयफलक-
त्वे तु विचारस्य तदर्हति तेन विना तत्त्वनिर्ण-
यानुदयात् । किञ्च मूलानुपस्थितौ क्रेतृनास्तिक-
योर्विवादे नास्तिकेन तावत्प्रकृते वस्तुनि स्वक्रीत-
त्वादिकं साक्षिद्वारा प्रसाध्य ततोऽदत्तत्यक्तविक्रीत-
त्वानि स्वयमभिधाय तद्वस्तु लभ्यतेतदुक्तम्,नास्ति
कश्चैव कुरुते तद्धनं ज्ञातृभिः स्वकम् । अदत्तत्यक्तवि-
क्रीतं कृत्वा स्वं लभते धनीति ॥ तत्र चादत्तत्वादिकं
तत्त्वनिर्णयार्थं साध्यते न तु भाषायामुत्तरे वा तदारू
ढमिति । नन्वेवं साक्षिणा न जानामीति निगदिते
तन्निगादयितुर्भङ्ग इति प्रदीपलिखनम् । युक्तञ्चैतत् ।

यदाह याज्ञवल्क्यः। प्रत्यर्थिनोऽग्रतोलेख्यं यथाऽऽवेदितमर्थिना । समामासतदर्द्धाहर्नामजात्यादिचिह्नितम्। श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ । ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्। तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥ प्रत्यर्थिनइत्यादि भाषालिखनं श्रुतार्थस्येत्याद्युत्तरलिखनम्। ततोऽर्थीत्यादि साध्यवतः प्रमाणस्य लिखनम्। तस्य प्रमाणस्यासिद्धावुत्तरयितुर्जयः तत्सिद्धौ तु तस्य भङ्गइति मिताक्षरा तथा च तदुभयं विरुद्ध्येत नहि साक्षिणोऽस्मरणमात्रेण वस्त्वभावःसिद्ध्यतीतिचेत् न योग्यास्मरणस्यैव तदर्थत्वात् अन्यथा न ह्यनुभवः संस्कारमाधत्तएव नापि संस्कारउद्बुध्यतएवेतिनियमः। तथा चास्मरणमात्रमपहाय साधकीभूतं योग्यास्मरणं ज्ञातुकामस्य प्रणिधानमुपयुज्यतइतिज्ञातानुपलब्धिस्थले स्ववचनेन सह तस्य विरोधआपद्येत ननु यत्र विधिबोधनार्थमुपस्थापितेन साक्षिणा निषेधोनिगद्यते तत्र तावन्मात्रेणैव तत्साक्षिकस्य वादिनो भङ्गः अन्यथावादिनोयस्य ध्रुवस्तस्य पराजयइति वचनात् विपरीतमतोऽन्यथेत्यस्याऽप्येवमेवार्थः तथा च तत्र साक्षिशपथं साक्ष्युत्तीर्णतां चानपेक्ष्यैव भङ्गोव्यवह्रियतइति कथं तत्त्वनिर्णयफलकत्वमस्तु विचार-

स्य न हि सतथ्यमेवाहेति चेत् मैवम् अत्र हि वादिनोः स्वाभ्युपगममात्रेणैव जयादिसिद्धिः न तु वस्त्वनुसारेण तदन्यथावादेन वा लोभमोहादिजत्वशङ्कायां तच्छपथाद्यस्तु । ननु चायं न वादः शिष्यगुरुकथात्वाभावात् न जल्पः सर्वनिग्रहोद्भावनप्रसङ्गात् न वितण्डा ततएव प्रतिस्थापनासम्भवाच्च तत्केयं कथाऽस्त्विति । वादइति गृहाण, न्यूनादयस्तु नात्रोद्भाव्यन्ते वचनबलात् । एवं सम्प्रतिपत्तावुत्तरे सिद्धिसाधनमपि नोद्भाव्यं वचनबलादेवेति अतएव मिथ्यासम्प्रतिपत्तिकारणरूपमुत्तरमवच्छेदभेदेन प्रत्यर्थिना प्रयुक्तं स्वरूपासिद्धिसिद्धसाधनविशेषणासिद्धीर्वदत्सदुत्तरमेव न तु सङ्करादसदिति निबन्धारः ॥ स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् । असम्भूय सुतान् सर्वान् न दानं न च विक्रयइति यदि समूलं तदा पूर्वपुरुषार्जितनष्टस्वोद्धृतपरमन्यथाऽदृष्टार्थं स्यात् ॥

अथ शुद्धिद्वैतनिर्णयः ॥ तत्र शङ्खः । सापिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानं च शौचाशौचं तदानुगम् । गोत्रं सन्ततिः तेन बीजिनमारभ्य सप्तमं पुरुषमभिव्याप्य सर्वेषां सन्तानिनां सन्तानानां च परस्परं सापिण्ड्यम् एकस्यापि

सप्ताधिकत्वे तेन समं सप्तान्तर्गतस्यापि सापिण्ड्यं निवर्त्तते सँय्योगवत्तस्योभयनिरूप्यत्वात्। पिण्डश्चेह शरीरं तेन समान एकः पिण्डः शरीरं येषां ते सपिण्डाः एकत्वं तु जनकशरीरानुबन्धात् तदुक्तं गर्भोपनिषदि अस्थिस्नायुमज्जानः पितृतस्त्वङ्मांस रुधिराणि मातृतइति । पत्नीनां तु पत्यासममास्थिभिरस्थीनीत्यादि श्रुतिबलात् तत्सापिण्डैस्तु तद्वारैव। एवञ्च साक्षात्परम्परासाधारणमिदं सापिण्ड्यमासप्तमपुरुषम् । एवं सति पितृष्वस्रीयादेः सापिण्ड्ये ऽप्यशौचलाघवं वचनबलात् । मिताक्षराऽप्येवम् ॥ ननु सपिण्डपदमिदमुक्तरीत्या यौगिकं योगश्चातिप्रसक्तः अष्टमादेरपि परम्परयैकशरीरान्वयसम्भवादिति । उच्यते द्वादशाहेन यजेतेत्यत्र प्रायणीयोदयनीयावाद्यन्ते अहनी गवामयने चेति श्रूयते तत्र प्रयान्त्यहान्यनेनेति प्रायणम् उदयन्त्यहान्यनेनेत्युदयनम् तत्र च छप्रत्ययेन प्रायणीयोदयनीयपदे सिद्धे तथा च त्र्यहपञ्चाहषडहदशरात्रादिकर्मस्वप्युपक्रमदिनोपसंहारदिने उभे अपि प्रायणीयोदयनीये प्रसक्ते इतीममतिप्रसङ्गमपेक्ष्य द्वादशाहिकगवामयनिकाद्यन्ताहान्यतरत्वमुपाधिरतो ऽन्यदीयेष्वाद्यन्ताहेषु यथा नातिप्रसङ्ग स्तथा सप्तान्यतम

त्वमत्राप्युपाधिस्तेन सपिण्डपदस्य सप्तान्यतमएव शक्योनाष्टमादिरिति । अतएव मत्स्यपुराणे । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥ अत्र तु पिण्डपदं न शरीरपरं किन्तु पितृयज्ञियपिण्डपरमिति विशेषः ॥सुमन्तुः॥ ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति ॥ धर्मोऽशौचादिः, आदशमात्, दशमात्परतः । तथा च दशमपुरुषानन्तरं ब्राह्मणानामशौचविच्छित्तिः । दशपुरुषपर्यन्तं तु दशरात्रत्रिरात्रादि । ननु दशपुरुषपर्यन्त मेकपिण्डान्वयः कथं स्यात्सप्तमपुरुषपर्यन्तेनैवैकपिण्डान्वयपूर्त्तेरिति । अत्र रत्नाकरः। यस्य कर्तुस्त्रयः पुरुषाजीवन्ति तस्य तत्पूर्वेषां षण्णां कर्तुश्चैकपिण्डस्वधात्वम् तस्यान्यस्यापि दशममभिव्याप्याशौचं किन्त्वासप्तमंपूर्णं ततआदशमं त्र्यहमितिवाक्यान्तरैकवाक्यतया सिद्धं नतु दशपुरुषपर्यन्तं सपिण्डतेत्येव वचनबलादायाति ॥ पूर्वाशौचनिमित्तेजाते ज्ञाते चाशौचान्तरनिमित्तेन जातमात्रेण सङ्करोज्ञातेन वा ॥ अत्र नाद्यः । जातमात्रस्याप्रायत्याजनकत्वात् ज्ञानं हि तत्तथा तथाच प्रथमेन द्वितीयेन च प्रायणादिना ज्ञातेन सता कर्मानधिकारप्रयोजकपापविशेषरूपम

शौचमुत्पाद्यं तच्च न द्वयं तथासति हि वर्द्धिष्णावशौचे प्रथमेन पुंसा क्रियमाणे प्रेतश्राद्धादौ शय्यादिदानं न स्यात् तदशौचान्तस्य प्रागेव जातत्वादिति किन्तु द्वाभ्यामुत्पन्नाभ्यां ज्ञाताभ्यामेकमेव पापं जन्यते नच पापेन पूर्वमरणं व्यवधापितं स्वाङ्गस्याव्यवधायकत्वात् अतएव च तावन्तं कालं कर्मानधिकारः तदन्ते चोभयोःप्रेतश्राद्धादिकं, यद्वा प्रथमोत्पन्ननिमित्तजनितपापाभिव्याप्यकालाभ्यन्तरे द्वितीयनिमित्तोत्पत्तौ प्रथमपापेन द्वितीयनिमित्तेन च एकमशौचं जन्यते तस्य जननमाद्यस्याभिरूपं आद्यपापद्वितीयनिमित्ताभ्यामघान्तरजननं वा उभयथा द्वयोरधिकारिणोस्तदत्ययकालएवाशौचान्तकालः ॥ नचैवं पूर्वोपनिपतितस्यापि मरणादेरशौचहेतोस्तदभिव्याप्यकालोत्तरं ज्ञाने निमित्तान्तरोपनिपाते च सङ्करः स्यादितिवाच्यं इष्टत्वात् । नन्विदं पापं न तावन्निमित्तजन्यं अज्ञातादपिमरणात्पापोदयापत्तेः, नापि निमित्त ज्ञानजन्यं तत्सन्देहेपि पापोदयापत्तेः नापि निमित्त निश्चयजन्यं निमित्तभ्रमेऽपि पापोत्पत्त्यापत्तेः नापिनिश्चीयमानानिमित्तजन्यं निमित्तस्य क्षणिकत्वेन तदानीमसत्त्वात् ॥ नापि निमित्तप्रमाजन्यं विदेश-

स्थपित्रादेर्जीवितएव मृतश्रवणे तदशौचान्ते श्राद्धादे-
रुपदेशादिति ॥ अत्राहुः ॥ निमित्तनिश्चयजन्य
मेवाशौचं नैमित्तिकत्वात् भिन्ने जुहोति स्कन्ने जुहो
तीत्यादौ तथैव नैमित्तिकहोमस्य सिद्धान्तितत्वात्
सङ्करस्तु प्रथमोत्पत्ति दूष्यकालाभ्यन्तरे द्वितीयनिमि
त्तोत्पत्तिः साचस्वदूष्यकालाभ्यन्तरे ज्ञाताऽघञ्जनयति
यथा प्रथमस्य दशाहे पतितं द्वितीयं दशाहं द्वादशाहे
ज्ञातमिति ॥ सद्यः शौचे तु तत्कालएव स्नानपिण्ड
श्राद्धानि ॥ नच सद्यः शौचमपि दिनव्यापकं, सद्यः
शौचन्तथैकाह इत्यादिविभागभङ्गापत्तेः। अशौचान्त
द्वितीयदिने शय्यादिपञ्चकमिति तु दिनव्यापकाशौ-
चपरं अन्यथा समर्थस्य क्षेपायोगाच्छ्राद्धं तदानीं श-
य्यादिकं तूत्तराहे स्यात्तथा च शय्यादिक्रमणादिभंगः।
नच ततएव प्रतिपत्तिरूपाङ्गानुरोधात् श्राद्धमप्युत्तरा
हे प्रतिपत्तिरूपस्याङ्गस्य प्रधानापेक्षत्वात् द्वितीये
ह्नीत्यस्याधिकारसम्पत्तिमात्रे तात्पर्याच्च अशौच
व्यपगम इति विष्णुवचनात्॥ अथ कृत्यद्वैतनिर्णयः॥
तत्रादौ व्रतद्वैतनिर्णयः ॥ तत्र धरणीव्रते ॥ एकाद
श्यां निराहारइत्यादिश्लोकस्य योदशम्यां भोजनोत्तरं
पाठः सएव सङ्कल्पः पूर्ववत्सङ्कल्पं परिकल्पयेदित्य-
ग्रिमद्वादशीव्रतेष्वभिधानेनास्यैव सङ्कल्पत्वव्यवस्थि-

तेरिति मैवं। काम्ये काम्याभिलापसहितः कुशति-
लजलत्यागरूपः सङ्कल्पः शास्त्रार्थ इतिप्रक्रमाधिकर
णोक्तस्यानुरोधेनास्य काम्याभिलापरहितस्य सङ्क-
ल्पत्वासम्भवात्। अत्र तु सङ्कल्पपदप्रयोगोगौणः। कि
ञ्च ज्यैष्ठद्वादशीव्रते ज्यैष्ठे मास्येवमेव सङ्कल्प्येत्याभि
धाय निष्कामएतद्व्रतमेव चीर्त्वेति शेषेऽभिहितं त-
था च तत्रैतच्छ्लोकपाठः सङ्कल्पाभावश्च कण्ठरवेणैवोक्त
स्तथा च एतद्भिन्नएव सङ्कल्पइति। नहि निष्कामस्य
सङ्कल्पः सम्भवति। नन्वेतद्भिन्नएवास्तु सङ्कल्पः किन्तु
सएव दशम्यां निशामुखे कार्यः, व्रतं निशामुखे ग्राह्यं
बहिस्तारकदर्शनइति विष्णूक्तेरिति चेन्न अस्य प्राय-
श्चित्तप्रकरणाम्नातत्वेन तन्मात्रपरत्वात् न चेदं वाक्यं
प्रकरणापेक्षया बलीयइति न प्रकरणेन नियम्यइति
वाच्यं एवं हि किमपि वाक्यं न प्रकरणेन नियम्येत
वाक्यत्वेनैव बलीयस्त्वात्। तथा चामन्त्रस्य तु शू
द्रस्य विप्रामन्त्रेण गृह्यतइत्याद्यश्राद्धप्रकरणाम्नात-
मन्यत्रापि शूद्रकर्तृकश्राद्धेऽन्वीयेत। कथन्तर्हि ज्यो
तिष्टोमप्रकरणाम्नातमप्युपांशुत्वमन्यत्राप्यन्वेति ।
परिभाषारूपत्वादित्यवेहि॥ यथा कराग्राग्रपवित्रकमा-
भ्युदयिकप्रकरणोक्तं पार्वणादावन्वेतीति॥ अथ व
राहपुराणीयेषु बहुषु प्रायश्चित्तव्रतेषु सायं सङ्कल्प-

स्योक्तत्वान्मूलकल्पनायां कर्त्तव्यायामस्ति सामान्य कल्पनायां लाघवं बीजमिति न्यायात् गुर्वनुगमाचा रवत् व्रतमात्रस्यैव सायं ग्रहणबोधकवेदकल्पनमुचि- त मितिचेद्भ्रान्तोसि राक्षसी नाम सा वेला गर्हिता सर्वकर्मस्विति सामान्यनिषेधोवचनेनैव बाध्योन तु न्यायेन तथा च प्रायश्चित्ते सबाध्यतां विशेषोपदेशा न्न तु व्रतान्तरेपि तदभावात् सर्वास्वेव यात्रासु गु रावनुगम्यमाने न किञ्चिदनिष्टमिति गुरुरनुगन्त व्यइति विधावपि सर्वासु यात्रासु गुर्वनुगमोभवतु शास्त्रार्थः । इह तु भङ्गएवानिष्टमिति । यत्तु वराहपुराणीयेषु बहुषु व्रतेष्वित्युक्तं तदप्यसत् व्रतान्तरे तदनभिधानात् द्वादशीव्रतस्य विचा- र्यत्वात् ॥ ❀ ॥ अथैकादशी ॥ तत्र भविष्य पुराणे ॥ षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्॥ एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः। आराधनाय द्वाद- श्यां विष्णोर्यद्वदियन्तथा ॥ कर्त्तव्या उपोष्या, यतः पतङ्गोपासनाय षष्ठ्यां सप्तमीसमेतायामुपोषणमा- हुः एकादश्यामित्यादि दृष्टान्तार्थं तेन यथोभयवेधे एकादशी द्वादशीविद्धा ग्राह्या तथा सप्तमी षष्ठी- विद्धा ग्राह्येत्यर्थः एवञ्च पूर्वविद्धायाएकादश्या-

निन्दावचनानि उभयवेधे द्रष्टव्यानि उभयवेधस्यैव दृष्टान्तनात् किञ्च उदयकाले सङ्कल्पविधानात्तस्यैव प्रधानत्वात् तत्रैव कालादरोयुक्त इत्ययं न्यायोवचनबलेन परं जीयते अतस्तिथ्यन्तरेष्वपि द्वैधे सत्युदयकालीनातिथिरेव व्रते आदर्तुमर्हति किञ्च विहितकाले प्रारब्धं कर्म कालान्तरेपि समाप्यत इत्याचार इत्यभ्युदितेष्ट्यामुक्तं ततोप्युदयकालीनातिथ्यादरः। पठन्ति च। सा तिथिस्सकला ज्ञेया यस्यामुदयते रविः॥ यथा सम्पूर्णा तिथिरुपवासादिकर्माङ्गं तथा उदयगामिनीत्यर्थः एवञ्च यत्र दशमीविद्धैकादशी दिनान्तरे न वर्द्धते तत्र दिनद्वयेपि प्रधानकाललाभाभावादङ्गमात्रकालानुग्रहाद्दशमीविद्धैकादशी ग्राह्या न तु द्वादश्युपवासः प्रमाणाभावात्। वराहपुराणादौ तु द्वादश्युपवासविधिर्द्वादशीव्रतत्वस्यागनार्थः उपवासपरोवा नत्वेवं विधे द्वैधे एकादशी कार्ये द्वादशींविधत्ते तथाऽश्रवणात्॥ नन्वेकादशीमुपवसेद् द्वादशीमथवापुनः। विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचिदिति वचनादेकादश्या दशमीमात्रयोगेपि शुद्धद्वादश्यामुपवासः कार्यइति प्रतीयते। तथा चात्रैकादशी कार्ये द्वादशीविधिः न पुनरिदं व्रतान्तरं एकादशीसन्दंशात्। एवञ्चात्र-

वाक्ये एकादश्युपवासविधिदशमीयुतैकादश्युपवासनिषेधरूपार्थद्वयवत्त्वे वाक्यभेदः स्यात् अप्राप्तस्य दशमीयुतैकादश्युपवासस्य निषेधश्चापद्येत तथा च यजतिषु ये यजामहङ्करोति नानुयाजेष्वितिवत् दशमीयुतैकादश्यन्यैकादशीमुपवसेदिति विधिशरीरं सिद्ध्यति तेनार्थाद्दशमीयुतैकादशीनिषेधः अनुयाजव्यतिरिक्तयागेषु ये यजामहं करोतीति वाक्यार्थसिद्धावर्थादनुयाजेषु तन्मन्त्रनिषेधवत् तथा च दशमीयुतैकादशी कथमुपवसनीया विध्यस्पृष्टत्वात् विधिस्पृष्टएवानुष्ठानान्वयात् ॥ सा च द्वेधा, दशमीमात्रयुक्ता पूर्वाह्ने, दशम्याउत्तराह्ने द्वादश्या च युक्ता। इयञ्चोभयी दशमीयुता निषिध्यते सङ्कोचकाभावादितिस्मृतिसारमतं तन्न न दशम्या युतां क्वचिदित्येतद्वाक्यस्य राजाद्यलिखितत्वेनामूलकत्वात् । समयप्रदीपादिस्वरसोप्येवं । समूलत्वे वा उभयवेधे सति पूर्वविद्धैव त्याज्या नतु दशमीमात्रविद्धापि षष्ठीसमेतेत्यादिवचनद्वयस्वरसात्, क्षये पूर्वान्तु कारयेदित्यादिविश्वरूपनिबन्धाच्च ॥ तद्यथा शुद्धा विद्धा तथा त्रेधा भिन्नान्यूनसमाधिकैः । त्रिधैकैका पुनर्भिन्ना द्वादश्यूनसमाधिकैः ॥ आद्यासु षट्सु पूर्वैव व्यवस्थाऽनन्तरद्वये । गृहमेधियतीनान्तु नव-

म्यां स्यात्परेहनि ॥ विद्धात्रये तु पूर्वा स्याद्व्यवस्थानन्तरद्वये । अपरेहनि शेषाः स्युः सप्तमी तु व्यवस्थया ॥ अस्यार्थः एकादशी शुद्धा विद्धाचेति द्विविधा एकैका च सा न्यूनत्वसाम्याधिकैः षोढ़ा तत्र षण्णां प्रकाराणाम्मध्ये एकैकःप्रकारो द्वादश्यूनत्वसाम्याधिक्येर्योगात् त्रिविधोभवति तथाहि एकादशी तावत् द्वादशीहानियुक्ता शुद्धहीना द्वादशीसाम्ययुक्ता शुद्धहीना द्वादश्याधिक्ययुक्ता शुद्धहीनेति ॥ शुद्धा प्रकारत्रये प्रथमःप्रकारस्त्रिविधः तथा द्वादशीहानियुक्ता शुद्धसमा द्वादशीसाम्ययुक्ता शुद्धसमा द्वादश्याधिक्ययुक्ता शुद्धसमेति ॥ शुद्धा द्वितीयप्रकारोपि त्रिविधः तथा । द्वादशीहानियुक्ता शुद्धाधिका द्वादशीसाम्ययुक्ता शुद्धाधिका द्वादश्याधिक्ययुक्ता शुद्धाधिकेति ॥ शुद्धातृतीयप्रकारोऽपि त्रिविधः एवं नवधा शुद्धैकादशी भिन्ना भवति ॥ एवं विद्धाप्रकारत्रयेप्येकैकः प्रकारस्त्रिविधः तथाहि द्वादशीहानियुक्ता विद्धन्यूना, द्वादशीसाम्ययुक्ता विद्धन्यूना द्वादश्याधिक्ययुक्ता विद्धन्यूनेति विद्धाप्रथमप्रकारस्त्रिविधः । एवं द्वादशीहानियुक्ता विद्धसमा द्वादशीसाम्ययुक्ता विद्धसमा द्वादश्याधिक्ययुक्ता विद्धसमेति विद्धाद्वितीयप्रकारोपित्रिविधः । एवं द्वाद-

शीहानियुक्ता विद्धाधिका द्वादशीसाम्ययुक्ता वि-
द्धाधिका द्वादश्याधिक्ययुक्ता विद्धाधिकेति विद्धातृ-
तीयप्रकारोपि त्रिविधः एवं विद्धा नवधा भिन्ना इत्य
ष्टादशैकादशीप्रभेदाः ॥ तत्रव्यवस्थामाह । आद्या-
सु षट्सु पूर्वैव व्यवस्थानन्तरद्वये । गृहमेधियतीनां
स्यान्नवम्यान्तुपरेऽहनि ॥ विद्धात्रयेपि पूर्वैव व्य-
वस्थानन्तरद्वये । अपरेहनि शेषाः स्युः सप्तम्यान्तु
व्यवस्थितिः ॥ अस्यार्थः । आद्यप्रकारषट्के पूर्वत्रोप-
वासः सर्वेषामाश्रमाणाम् । द्वादशीहानियुक्ता शुद्धा
धिका द्वादशीसाम्ययुक्ता शुद्धाधिका इत्यनन्तरपक्ष
द्वये गृहस्थयतिनोर्विकल्पेनोपवासःएतत्परमेव स्कन्द
पुराणे वचनम् ॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
उत्तरान्तु यतिः कुर्यात्पूर्वामुपवसेद्गृही ॥ यद्य-
प्यत्रैकादश्यां शुद्धाधिक्यमेवोक्तं न द्वादशीहानियो
गो द्वादशीसाम्ययोगोवा तथापि तदुभययोगोऽर्था
दुक्तः द्वादश्याधिक्ययुक्तायां शुद्धायां नवमप्रकारे
सर्वेषामुत्तरत्रोपवासविधानात् । अयमेवार्थो नव-
म्यां तु परेऽहनीत्यनेनोक्तः । यच्च गरुडपुराणे संपूर्णै-
कादशी यत्र प्रभाते पुनरेव सा । त्रयोदशी उषः काले
उपोष्या तत्र का भवेत् ॥ उपोष्ये द्वे तिथी तत्र विष्णु
प्रीणनतत्परैः । इत्यनेन द्वादशीहानेसाम्ययोगे-

शुद्धाधिक्यद्वये एकादशीद्वादश्योरुभयत्र स-
र्वेषामुपवासविधानं तत् सङ्कसुकश्रद्धाजाड्यविष
यं एकेनैवोपवासेन फलसिद्धावितरवैयर्थ्यात् । एवं
शुद्धानवप्रकारेषु व्यवस्था सिद्धा ॥ द्वादशीहानियु
क्ता विद्धहीना द्वादशीसाम्ययुक्ता विद्धहीना द्वा
दश्याधिक्ययुक्ता विद्धहीनेति विद्धाया आद्यप्रका
रत्रये पूर्वा दशमीविद्धैवोपोष्येति । तथा च स्मृतिः ।
एकादशी न लभ्येत सकला द्वादशी भवेत् । उपो-
ष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् ॥ एतद्वच-
नबलादेव नेयं पर्युदसनीयेति गम्यते । यद्यप्यत्र वि
द्धान्यूनत्वं विशेषो न गम्यते तथापि सकला द्वाद
शी भवेदितिवचनात् विद्धाधिकविषयत्वाभावात्
विद्धान्यूनविषयत्वं मन्तव्यं विद्धाचतुर्थपञ्चम प्रका
रयोर्व्यवस्थायांस्मृतिः । दशमी मिश्रिता पूर्वा द्वाद-
श्यां यदि लुप्यते । एकादश्यान्तदाब्रह्मन्नुपवासः
कथम्भवेत् ॥ शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकांक्षि
भिः । सकामैर्गृहिभिः पूर्वा विद्धापीति सुनिश्चयः ॥
एवञ्च द्वादशीमथवा पुनरिति पूर्वलिखितं वचनं य-
दि समूलं तदापि यतिविषयमितिमन्तव्यं द्वादश्याधि
क्ययुक्ता विद्धसमेति विद्धायाः षष्ठप्रकारे द्वादशी सा
म्ययुक्ता विद्धाधिकेत्यष्टमप्रकारे द्वादश्याधिक्ययुक्ता

विद्धाधिकेतिनवमप्रकारे च सर्वेषामुत्तरोपवासः द्वाद
शीहानियुक्ता विद्धाधिकेति विद्धायाः सप्तमप्रकारे गृ-
हियतिनोर्व्यवस्था विष्णुरहस्ये॥ निष्कामस्तु गृहीकुर्या
दुत्तरैकादशीन्तथा । सकामस्तु सदा कुर्यात् पूर्वां बौ-
धायनोमुनिः ॥ एवं विद्धाया नवसु प्रकारेषु व्यव-
स्था सिद्धा । एकादश्यष्टमी षष्ठी द्वितीया च चतु-
र्दशी । अमावास्या तृतीया च उपोष्याःस्युः परा-
न्विताः ॥ इति विष्णुधर्मवचनं विद्धाधिकैकादशी
विषयमतोन विरोधः । कलार्द्धेनापि विद्धा स्याद्द
शम्यैकादशी यदा ॥ तदा ह्येकादशीं त्यक्त्वा द्वाद
शीं समुपोषयेदिति वचनं विद्धासमद्वादश्याधि-
क्यविषयं दशमीविद्धैकादश्युपवासनिन्दाप्रति
पादकवचनानि च परत्रैकादशीसम्भवविषयाणी
ति प्रतिपादितमधस्तात् । उपोष्या द्वादशी शुद्धा
एकादश्यां दिनक्षये । मुमुक्षुभिर्दशाविद्धा नोपोष्यै
कादशी तिथिः ॥ द्विःस्पृशैकादशी यत्र तत्र सन्नि
हितोहरिः ॥ तामेवोपवसेत्काममकामोविष्णुतत्प
रः । एकादशी दशाविद्धा परतोयदि वर्द्धते ॥ गृहि
भिर्यतिभिश्चैव सैवोपोष्या महातिथिः॥ तथा ॥ वृद्धौ
परा तु कर्त्तव्या क्षये पूर्वान्तु कारयेत् ॥ इत्यादि स्मृ-
तिवचनानामनवकाशापत्तेः दिनत्रयवती जाता

तिथिरेकादशी यदि । प्रथमा तत्र नोपोष्या उपोष्या चोत्तरा तिथिः ॥ उत्तरा एकादशीद्वादशीत्रयोदशीरूपा इति च वाक्यं पूर्ववाक्यपर्यालोचनया मुमुक्षुविषयं इदञ्च मिताक्षराकारस्याप्यनुमतं अस्मिन्नेवार्थे महाजनपरिगृहीतवाक्यानि । शुद्धाधिकान्यूनसमोत्तरा चेत्पूर्वा गृहस्थैर्यतिभिः परैव । साचेत्पराधिक्यवती परैव शेषास्तु शुद्धाः प्रथमा उपोष्याः ॥ विद्धा समा न्यूनसमोत्तरा चेद्विद्धाधिका न्यूनपरा च तत्र । सैव व्यवस्था यदि विद्धहीना ग्राह्योपवासे प्रथमैव सर्वैः ॥ विद्धासमा यद्यधिकोत्तरास्याद्विद्धाधिका द्विद्धसमोत्तरा स्यात् । तदा परैव प्रतिमुक्तशङ्कैरेकादशी सर्वजनैरुपोष्येति सिद्धम् ॥ एवं विष्णूक्तेषु चतुर्षु द्वादशीव्रतेषु द्वादश्यां वासुदेवपूजा प्रधानं तत्पूर्वदिने तूपवासोऽङ्गम् ॥ नाम द्वादशीव्रतेषु द्वादशस्वपि द्वैतमेवनास्तीति ॥❀॥

अथ कृष्णाष्टमी निर्णयः ॥ तत्रैकं द्वादशस्वपि कृष्णाष्टमीषु रोहिणीयोगपुरस्कारेण जयन्तीव्रतम् । तत्र च पूर्वाह्ण एव रोहिणीयोगः शास्त्रार्थ स्तत्र गोविन्दार्चनस्य विहितत्वात् काम्यपूजायाश्च, मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनं । पूर्वाह्णएव कुर्वीत देवतानाञ्च पूजनमित्यनेन पूर्वाह्णएव विधा

नात् दन्तधावनञ्चेदं मङ्गल्यरूपं काम्यं तादृशाञ्ज
नसाहचर्यात् अञ्जनञ्चेदं सौवीराञ्जनरूपं देव-
तार्चनन्तु यन्नित्यं तद्‌द्वितीयप्रहरपूर्त्तौ तदुत्तरं वा ॥
तृतीये च तथा भागे स्नानार्थं मृदमाहरेत् । समित्पु-
ष्पकुशादीनि स्नानञ्चाकृत्रिमे जले । इत्यभिधाय च
तुर्थेकाले स्नान मुपदिश्य तर्पणोत्तरं । आशयस्थञ्च सं-
पूज्य प्रतिमास्वपि पूजयेदित्यभिधानेन । तथा । त-
तो गृहार्चनं कुर्यादभीष्ट सुर पूजनं । तथा । ततो विष्णु
गृहं व्रजेदित्यादिभिर्वाक्यैस्तस्य मध्याह्नोत्तरं विधा
नात् । अप्रत्याख्येयकार्यानुरोधात्तु मध्याह्नस्ना
नादीनामपकृष्य करणेपि न क्रमभङ्गः तदविरोधेनै
व प्रातः सर्वेकृताह्निका इत्यपि नेयं अतएव मध्याह्न
उदये वापि विभ्राडादीञ्छया जपेत् ॥ तत उदयोत्तरं
मध्याह्नस्नानकरणे इदमित्याचारपारिजातादौ
व्यक्तं ॥ रोहिण्यष्टमीव्रतन्तु अर्धरात्रे भाद्रकृष्णाष्ट
म्यां रोहिणीयोगे सति । तत्र च तदैव पूजादिकम् ।
तिथिभान्ते च पारणं भवतीति गौडाः ॥ तच्च काम्य
मित्यपितएव ॥ कृष्णाष्टमीव्रतन्तु रोहिणीयोगम-
नपेक्ष्यैव तत्र रोहिणीयोगाश्रुतेः । तथाहि अथ भाद्र
पदे मासि कृष्णाष्टम्याङ्कलौ युगे । अष्टाविंशतिमे-
जातः कृष्णोसौ देवकीसुतः ॥ भारावतरणार्थाय क्ष-

त्रियाणां क्षयायच । तस्मात्स तत्र संपूज्यो यशोदा देवकी तथा ॥ गन्धैर्माल्यैस्तथा पुष्पैर्यवगोधूमसम्भवैः । सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैः पृथक् ॥ रात्रौ प्रजागरः कार्योनृत्यगीतसमाकुलः । अरुणोदयवेलायां नवम्याञ्च ततस्त्रियः ॥ रक्तवस्त्रावृतास्सर्वारक्तमाल्यैरलङ्कृताः । नयन्ति प्रतिमाह्येषां नानाविभवसम्भवाः । नदीतीरं शुभं रम्यं विविक्तं वा महत्सरः ॥ तत्र स्नानं प्रकुर्वन्ति स्नापयन्ति च तास्ततः । ततः प्रविश्य च गृहं यवान्नं भुञ्जते चताः ॥ युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह । तत्र अष्टम्यां, तस्याएवोपास्थितत्वात् एवञ्च पूजादिवैव पूजाऽऽधारत्वेन रात्रेरश्रुतात्वादौत्सर्गिकस्य पूर्वाह्णकृत्यत्वस्यानपवादात् रात्रौ प्रजागरः कार्य इति तत्रैव विशेषाभिधानाच्च ॥ यत्तु भुञ्जतेचता इत्यादिश्रवणात् स्त्रीणां व्रतान्तर्गतोपवासे विहिते व्रतमेवेदं स्त्रीमात्राधिकारिकं, उपसंहारानुरोधात्तथैवाक्ताधिकरणे सिद्धान्तनादिति तन्न तेनापि स्त्रीणां पारणाद्रव्यविशेषमात्रस्यैव विधानात् तथा च स्त्रीणान्तत्र पारणाद्रव्यमायाति अत एव च प्रतिमानयनस्यापि तत्कर्त्तव्यत्वविधानसामर्थ्येन तद्रूपमङ्गं स्त्रीमात्रकर्त्तव्यं भवतु नतु तावतैव अ-

ङ्गिनोव्रतस्य स्त्रीमात्राधिकारिकत्वमायाति अक्ता
धिकरणे तु घृतस्तुतिरन्यथा सिद्धा अत्र तु न तथेति
विशेषः । अस्त्वेवं तथापि पुरुषाधिकारे किं प्रमा-
णं अधिकारिविशेषाश्रुतौ सामान्यकल्पनायां लाघ
वानुग्रह इत्यवेहि अतएव समयप्रदीपादौ स्त्रीपुंस
सामान्याधिकारिकमेवेदं व्रतं सङ्कोचे प्रमाणाभा-
वादिति सिद्धवल्लिखितं। नरोवा यदि वा नारीति भ
विष्यपुराणवचनाच्च ॥ व्रतञ्चेदं नित्यं अकुर्वन्नि
रयं याति यावदिन्द्राश्चतुर्दशेति तद्वचनात् । विश्व
जिन्न्यायेन फलकल्पने गौरवाच्च ॥ यत्तु हेमाद्रौ
जन्माष्टमीव्रतं तदपि रोहिण्यष्टमीव्रतवदिति तत्रैव
व्यक्तं ॥ व्रतोपवासनियमपूजादिना ब्राह्मणैर्विष्णु
रेवाराध्यः। सर्वधर्मान्परित्यज्य मामेकं शरणंव्रज। अहं
त्वा सर्वपापेभ्योमोक्षयिष्यामि माशुच इति गीतासु-
भगवद्वचनात् तदाराधनमपि कामनया बन्धाय त्रै
विद्यामामित्युपक्रम्य एवं त्रयीधर्ममनुप्रपन्ना गता
गतं कामकामालभन्ते इति गीतासुभगवद्वचनात्
काम्यमपि कर्म कामनामन्तरेण कृतं न बन्धाय किन्तु
परम्परयामुक्तये अतएव ददामि देयमित्येव यजे यष्ट-
व्यमित्यहमिति युधिष्ठिरोप्याह ॥ कामना तु मुमुक्षो
सर्वथाविरुद्धा जहि शत्रुं महाबाहो कामरूपं दुरासद

मिति गीतासु भगवद्वचनात् यद्यपि मुमुक्षापि कामनैव तथापि नासौ रागः सतु निषिद्धः रागस्य बन्धनसमाज्ञानादिति गौतमसूत्रात् ॥ पुत्रास्तु द्वादश औरसादयः प्रसिद्धा एव ॥ तत्र तेषां येन क्रमेण पाठस्तेनैवक्रमेण ज्यैष्ठ्यंयत्रतु बहवऔरसास्तत्रापि प्रेतश्राद्धेषु ज्येष्ठ एवाधिकारी प्राथम्यात् नतु सर्वे विनिगमनाविरहापत्तेः । अथ ज्येष्ठे अशौचान्तदिने क्षतादिना दूषिते तत्र कनिष्ठस्य पुत्रत्वेन स्वरूपयोग्यस्य क्षतिज्येष्ठकत्वेन सहकारियोग्यतया कर्तृत्वमस्त्विति चेत् न ज्येष्ठत्वेनाधिकारात् अधिकृतस्यैव च कर्तृत्वात् । नच पुत्रत्वेनैवाधिकारिता अविनिगमनापत्तेरित्युक्तत्वात् ननु अशौचान्तदिने आद्यश्राद्धस्य विहितत्वेन तद्दिने तस्यावश्यकतया तेनैव कनिष्ठस्याप्यधिकारआक्षिप्यत इति चेत् नहि विधिरेव नियमविधिः तयोर्भेदात् । देये पितॄणां श्राद्धे वै अशौचं जायते यदि । अशौचे तु व्यतीते वै तेषां श्राद्धं प्रदीयते ॥ इत्यादिना एकोद्दिष्टस्याशौचप्रतिबद्धस्य स्वप्रतिबन्धकाशौचान्तकर्त्तव्यत्वाभिधानाच्च । अयन्तु विशेषोयत्क्षतादिना एकादशाहोत्पन्नाशौचान्तरेण वा यदाद्यश्राद्धप्रतिबन्धस्तदा तदशौचान्ते आद्यश्राद्धकरणे ततः प्राक् शय्या

काञ्चनपुरुषकपिलगवीदानानि दम्पतिपूजावृषो त्सर्गौ च न भवन्ति तद्दिने प्रापकाभावात् प्रकृताशौ च मुपक्रम्य अशौचान्ताद्द्वितीयेह्नीति श्रवणात् यत्रतु सङ्करेणाशौचकालवृद्धिस्तत्र द्वितीयसन्नि पातेन प्रकृताशौचस्यैवाभिवृद्धिरिति सिद्धान्तना- त् तत्र शय्यादिदानं भवति क्षतान्तादौ तु आद्यश्रा- द्धकरणे तत्प्रयोगाभ्यन्तरे छत्रोपानद्दानं तत्प्रयोग विध्यालिङ्गितत्वादितिवृद्धाः ॥ द्वादशविधपुत्रर- हितस्य पुत्रकरणेऽधिकारः । अपुत्रेण सुतः कार्यो यादृक्क तादृक् प्रयत्नतः । पिण्डोदकक्रियाहेतोर्ना- मसङ्कीर्त्तनस्य चेतिवचनात् अपुत्रेण द्वादशविधपुत्र- रहितेनेति रत्नाकरव्याख्यानात् ॥ अथ क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ पुत्रप्रतिनिधीन् औरस पुत्रिकापुत्रप्रतिनिधीन् तेन तयोरभावे एते उपा दीयन्ते मुख्याभावे प्रतिनिध्युपादानस्य शास्त्रार्थ- त्वात् अतएव बृहस्पतिः ॥ आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः । तथैकादशपुत्राः स्युः पु- त्रिकौरसयोर्विना ॥ स्युरिति एतयोरसत्त्वे एते भव- न्तीत्यर्थः । एवञ्चैतदुभयाभाव एव पुत्रान्तरकरणं नतु द्वादशविधपुत्राभाव इति उच्यते एतानेकाद

शापि पुत्रान्मनीषिणः पुत्रप्रतिनिधीनाहुः औरस पुत्रिकापुत्रसदृशान् ताभ्यामीषन्न्यूनानित्यर्थः तथा च तयोरेवासत्वे पुत्रान्तरकरणमितिनार्थः किन्तु एतौ प्रधानभूतौ सन्तानकारणत्वादेव । अन्येतु त-दपेक्षयाकिञ्चिदूनाः सन्तानाप्रवर्त्तकत्वात् । तदुक्तं सन्तानकारणन्तेषामौरसः पुत्रिका तथेति । किञ्च अ पुत्रेण सुतः कार्य इति समान्याभावस्वरसादप्येवं अ-तएव क्रियालोपात् क्रियालोपप्रसङ्गादित्यपि घटते अपत्यमुत्पादनीयमिति विधिना तावदपत्योत्पाद-नक्रिया विहिता सच विधिर्नित्यः अप्रजास्सन्त्वपुत्रिणोनापुत्रस्य लोकोस्तीत्यादिनिन्दार्थवादबलात् तथा चैतदुभयाभावे एकादशान्यतमेनापि तद्विधि रक्षणं कार्यमित्यर्थः एवञ्चैषां सर्वेषामेकतमस्यापि सत्त्वे न पुत्रकरणं तद्विधायकाभावादिति । ननु भवत्वेवं भ्रातृजसत्त्वे त्वस्तु पुत्रकरणमिति उच्यते। भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणोमनुरब्रवीत् ॥ सर्वासामेकप-त्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तेनैव पुत्रेण प्रा ह पुत्रवतीर्मनुः ॥ यद्येकजाताबहवो भ्रातरश्चसहोद राः । एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥ बह्वीनामेकपत्नीनामेषएव विधिः स्मृतः । एका

च्चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥ अयञ्च पुत्रित्वातिदेशस्तथैवोपसंहारात् तत्प्रयोजनन्तु पुंसः पुन्नामनरकाप्राप्तिः स्त्रियाः सपिण्डनार्हत्वं उभयोः कृत्रिमाद्यकरणमिति एवञ्च पुत्रित्वातिदेशात् पुंसा सति सोदरजे स्त्रिया च सति सपत्नीपुत्रे कृत्रिमादयो नोपादेया एवमेवासहायोदयकरकल्पतरुपारिजातरत्नाकरादयः। ननुचापुत्रेण सुतः कार्योयादृक्ता दृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसङ्कीर्त्तनस्य चेति वचने अपुत्रेण द्वादशविधपुत्ररहितेनेतिव्याख्यानदर्शनात् सत्यपि भ्रातृपुत्रे कृत्रिमाद्युपादानमस्त्वितिचेत् न पुत्रित्वातिदेशेन हि पुत्रितुल्यत्वे सिद्धे नापुत्रस्य लोकोस्तीति श्रुत्या अप्रजाः सन्त्वस्त्रिण इति वसिष्ठवचनेन चास्वर्गित्वं अदनशीलत्वं राक्षसत्वमितियावत् तच्च यत्प्रतिपादितं अन्यच्च यदपुत्रत्वप्रयुक्तमनिष्टं तत्सर्वनिषेधस्तावत्सिद्धएवेति न तदर्थं पुत्रोत्पादनं नापि पिण्डादिक्रियार्थन्तत् अस्याअन्यतोपि सम्भवात् नापि नामसङ्कीर्त्तनार्थं तन्मात्रस्यानुद्देश्यत्वात् एवञ्च पिण्डोदकेत्यादिवचनमभ्युच्चयपरं फलन्तु नित्यविधिपरिपालनमेव। ननु तर्हि तदर्थमेव पुत्रोत्पादनमस्तु पुत्रोत्पादन क्रियायादेशितत्वादि

तिचेत् न पुत्रित्वातिदेशेन निन्दार्थवादे निरस्ते अनिष्टवारणार्थाया अपत्योत्पादनाक्रियायाअनवतारात् एवञ्च द्वादशविधपुत्ररहितेन पुत्रित्वातिदेशशून्येन च पुत्रः कार्य इति निर्गलितं अतएव द्वादशविधपुत्रासत्वे भ्रातृजसत्वे पुत्राकरणं रत्नाकराद्यनुमतं सङ्गच्छते ॥ तदयं संक्षेपः। नरकपातपरिहारार्थं तावत् क्षेत्रजाद्युत्पादनं सच क्वचित् पुत्रित्वातिदेशादेव परिहृतः क्वचित्तु भ्रातृजादेरप्यभावे क्षेत्रजादिकमुत्पाद्य परिह्रियते। औरसपुत्रिकापुत्रयोस्तु सन्तानकरणत्वेनोपादानं नतु क्रियालोपप्रसङ्गभयेन अतएव भ्रातृजसपत्नीपुत्रयोरपि सत्वे तदुभयोपादानमिति द्वादशविधपुत्ररहितस्य भार्यापौत्रवतः प्रमीतस्य षोडशी पौत्रेणकार्या ॥ पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशमिति वचनादिति। पुत्रपौत्राभावे श्राद्धं भार्यया तदभावे भ्रातृजेन कार्यं ॥ भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते। तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदर इतिवचनात् ॥ स्त्रियास्तु पत्या, भार्यापिण्डं पतिर्दद्यादिति साक्षाद्विधेः, तदभावे सपत्नीपुत्रेण, पिण्डदस्तुसइति वचनात् ॥ ❀ ॥ अथ कृत्य द्वैतानि-

णयः ॥ ❀ ॥ तत्र प्रथमं तन्मूलमासनिर्णयः ॥ तत्र ज्योतिःशास्त्रम् । दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसैस्तु सावनोमासः । रविसंक्रान्तिसुचिह्नः सौरोपिनिगद्यते सद्भिः ॥ सचसावनोऽशौचे त्रिंशता वारैः मासेन शुद्ध्यतीत्यस्याह्नोपक्रमणात् मासिकादौ त्रिंशता तिथिभिः एकातिथिरित्यादि श्रवणात् । विवाहादौ स्मृतः सौरोयज्ञादौ सावनो मतः । शेषे कर्मणि चान्द्रः स्यादेषमासविधिः स्मृतः ॥ शेषे श्राद्धादौ, तत्र चान्द्रो द्विधा चन्द्रकलोपचयापचयाभ्यां । तत्राद्यः शुल्कादिः सचौत्सर्गिकः, द्वितीयः कृष्णादिः सतु ब्रह्मपुराणानुसारात्तिथिकृत्येष्वेव तेन दर्शश्राद्धादौ कृष्णादिरेव मास इतिसएव निर्देश्यः तस्य तत्तिथिपुरस्कारेणैव करणात् तद्दिनएव तु सांवत्सरिकादौ शुक्लादिरेव निर्देश्यः तस्य प्रायणतिथिकर्त्तव्यत्वेन त्रिंशत्तिथिसाधारणतया तिथिनियतब्रह्मपुराणास्पर्शात् । नन्वेवं सांवत्सरिके शुक्लादिक्रमेण निर्देशइत्युक्तं तच्च सकललोकप्रयोगविरुद्धमितिचेत् । किमतो न्नहि ते परीक्षकाः । ननु परीक्षकेणापि श्राद्धविवेककारेण कृष्णादिप्रयोगं पुरस्कुर्वता निर्देशासङ्गतेरिति लिखितमितिचेन्न तेऽपि हि तत्र विष्णुवचनविरुद्धाभिधायित्वादपरीक्षकाएवेति ॥ एतच्च च-

क्रवत्परिवर्त्तेत सूर्य्यः कालवशाद्यतः। अतः सांव्व-त्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् । मासचिह्नंतुक र्त्तव्यं पौषमाघाद्यमेवहि। यतस्तत्राविधानेन मासः सपरिकीर्त्तितः ॥ इत्यत्र व्यक्तं। विवाहादाविति अ-त्रापि विवाहे सौरपरिग्रहः। गर्भाधानपुंसवनसीम-न्तोन्नयनजातकर्म्मनामकरणेषु न सौरपरिग्रहः। किन्तु गर्भाधाने निमित्तमात्रस्य, मध्ययोः सावनस्य, चतुर्थे तु जन्मनः पुरस्कारः, पञ्चमे तु एकादशदिना दिपुरस्कारः, अन्नप्राशनेतु सावनपुरस्कारः। चूडा-करणे तु सावनमासघटितत्वपुरस्कारे सति सौरपुर-स्कारः उपनयनेप्येवम् किन्तु गर्भसम्बन्धादब्दसं-ख्यागणना योनिग्रहिर्भावाद्वेति ॥ तदुक्तं मनुना, ग-र्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्। गर्भादेका-दशे राज्ञो गर्भात्तु द्वादशे विशइति॥ अत्र गर्भाधानं क्षे-त्रसंस्कारः तेन तत् सकृदेव एवं पुंसवनसीमन्तो न्नयनेअपि जातकर्म्म तु न तथेति तेन तत्प्रतिपुत्रमा-वर्त्तते। विप्रकृष्टेन तु पित्रा उत्तरदिनादावपि पुत्रज न्मज्ञाने जातकर्म्म कार्य्यं तत्र तु नाभ्युदयिकं, न सोष्यन्तीजातकर्म्मप्रोषितागतकर्म्मास्वित्यादि नि षेधात्। तत्र संस्कारकर्म्मणि मातृकापूजाभ्युदयिके प्राक्, तत्रापि मातृपूजा आदौ आवश्यकी च। क-

र्म्मादिषु च सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः । इतिकात्यायनवचनात् ॥ सर्वेषु श्राद्धवत्तु ॥ श्राद्धञ्च कचिदङ्गं क्वचित्तु तदतिरिक्ते नैमित्तिकमिति प्रपञ्चितं श्राद्धचिन्तामणाविति ॥ अकृत्वा मातृयागन्तु पितृभ्यः परिवेषयेत् । तस्य क्रोधसमाविष्टाहिंसामिच्छन्ति मातरः ॥ इतिवचनाच्च । इदञ्च मातृपूजनं नान्दीमुखश्राद्धवत् साक्षादिष्व्यन्वयि कर्मादिषु मातरः पूज्याइति वचनादेव तेन तद्वदत्रापि संकल्पउचितः । मातृपूजानन्तरन्तु नान्दीमुखश्राद्धं । षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति कात्यायनवचनात् अत्र षड्भ्यइति मात्रादेरप्युपलक्षणं तासामपि श्राद्धस्य स्मृत्यन्तरसिद्धत्वात् । अत्र नान्दीमुखे विवाहे च प्रपितामहपूर्वकं । वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकमिति वचनाद्यथा कन्यादानवाक्ये प्रपितामहपूर्वकता तथा नान्दीमुखश्राद्धवाक्येपीति न देश्यं बहुतरवचनविरोधात् किन्तु नान्दीमुखपदं विवाहविशेषणं चकारस्तु पूर्वोक्तकर्मसमुच्चयपरः, तेन विवाहे यद्दानवाक्यमर्थात्कन्यायास्तत्प्रपितामह पूर्वकं कार्यं पैतापौत्रीत्रिरभ्यसेदितिवचनात् इदञ्च नान्दीमुखश्राद्धं पुत्रोपनयनादिकं करिष्यता पित्रा-

कार्यं ॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मणि। पिण्डानोद्वाहनात्तेषां तस्याभावेतुतत्क्रमादितिवच नात् संस्कारश्च पुत्रविवाहेष्वाद्यएव नतु सर्वेषु आ- द्यादेव संस्कारोदये द्वितीयादेर्व्यर्थत्वात् कि- ञ्च द्वितीयादयो न संस्कारजननक्षमाः संस्कारव- ति सजातीयसंस्कारोदयासम्भवात् ॥ अथ बा- लादिसंस्कारे तत्पितृभिन्नेनापि क्रियमाणे पित्रा- नान्दीमुखश्राद्धं कार्यं पुत्रसंस्कारमात्रस्यैवतन्निमि- त्तत्वादिति केचित् तन्न एवं हि संस्करणीयपितुरेव तत्राधिकारइति मन्यसे तथाच तस्याभावे तु तत्क्रमा- दिति व्याहन्येत नहि पित्रन्यस्यापि नान्दीमुखा- धिकारमात्थ तस्मात् पित्राऽपित्रा वा कन्यादानमाण- वकोपनयनादौ क्रियमाणे तन्निमित्तिकं तदङ्गभूतं वा श्राद्धं कार्यं नैमित्तिके निमित्तवतोऽङ्गे च प्रधानाधि- कारिणएवाधिकारादिति ॥ अत्रच पितरि सति तद्वत् तस्मिन्नसति माणवकवन्नान्दीमुखश्राद्धं कार्यं नतुतस्मिन्नसत्यपि तद्वदेव कार्यमितिकल्पः पूर्व- कल्पव्यवच्छेदकतुशब्दबाधितत्वात् तस्याभावे त्वितिवचनात् तेन तस्य संस्कार्यपितुरभावेऽसत्त्वे तेषां पितॄणां कृते तत्क्रमात् संकार्यक्रमाद्दद्याद- न्यथा व्यवच्छेदोन स्यात् अतएव वृद्धौ पितुः सपिण्ड

नम-यथा पितामहस्यैवाभ्युदयिकार्हस्य सत्वे पि-
तुः सपिण्डनाय तदानीं निर्बन्धोनस्यात् न चैवमे
वास्तु, तथा सति हि सपिण्डनकालो न स्यादेव अ-
तएव मृतस्य कन्याविवाहे तदीयमाभ्युदयिकं
कन्यादानाधिकारिणा कार्यमिति श्राद्धकल्पश्राद्ध
चिन्तामणिप्रभृतयोनिबन्धाः। नान्दीमुखे च, शर्म
णोक्षय्यकालेस्यादित्यादिना प्रकृतौ षष्ठी प्रीयता
मित्यक्षय्यस्थानइति वैकृतविशेषोपदेशेन बाध्यते
तेनामुकदेवी दत्तैतदन्नपानादिभिः प्रीयतामित्यादि
त्यागवाक्यं सिध्यति॥ सामगानान्तु वैकृतविशे-
षोपदेशाभावान्नैवम्॥ श्राद्धकल्पादयोप्येवम्॥ मधु
चात्र न देयं, आमिषत्वात् वसिष्ठोक्तोविधिः कृत्स्नो
द्रष्टव्योत्रनिरामिष इति कात्यायनवचनेनात्रामिष
निषेधात्। नच पिण्डाँस्तु दधिमध्वक्तानित्यादिना
पिण्डे मधुदानविधानात् पिण्डस्य च श्राद्धद्रव्यशेष
कर्त्तव्यत्वाभिधानात् श्राद्धेपि तदेव द्रव्यमायाति
फलचमसन्यायादितिवाच्यं वैषम्यात् दृष्टान्ते हि
फलचमसमस्मै भक्षं प्रयच्छतीत्यनेन ऋत्विग्भक्षत्वेन
विधानात् ऋत्विग्भक्षस्य च होमद्रव्यशेषतया फल
चमसस्य होमद्रव्यत्वमायाति अत्र तु तद्वत् पि-
ण्डस्यापि श्राद्धशेषान्नकर्त्तव्यतया श्राद्धस्य पिण्ड

द्रव्यसजातीयद्रव्यकत्वं सिद्ध्यतु नतु पिण्डविशे-
षणीभूतमधुद्रव्यकत्वमपि मधुना विनापि पिण्डस्य
निष्पत्तेरिति ॥ अग्नौकरणशेषन्तु पिण्डार्थमवशे-
षयेदिति यमवचनाच्च तस्याग्नौकरणशेषद्रव्य
कत्वसिद्धेः । यज्ञादौ सावन इति ॥ यथा षडह द्वा-
दशाहौ यागौ तथा मासद्विमाससाध्याअपि
यागाः, तत्र त्रिंशत्तिथ्यात्मकः सावनो मासः । तदु-
क्तम् ॥ एका तिथिः कापि तदादिभूता तिथिस्तृतीये
ति तिथिप्रबन्धः । मासः सचान्द्रस्तिथिनाम्नि य-
स्माच्चाद्रीं कलामाप्य सदा प्रवृत्त इति ॥ अस्यार्थः ।
एका तिथिः कापि पूर्वावधिभूता तदादिभूता ति-
थिस्तदव्यवहिता तु पूर्वतिथिरुत्तरावधिभूता तेन
दशम्यां पूर्वावधिभूतायां तार्त्तीयिकनवम्यां सा-
वनोमासोभवति शूद्राशौचावच्छिनानि तु त्रिंश
द्दिनानि यद्यपि न त्रिंशत्तिथिनियतानि किन्तु
त्रिंशदहोरात्ररूपाणि तथापि तान्यपि सावनमास
प्रतिरूपकमासारम्भकाण्येवेति ॥ एवमाश्विनापरप
क्षे चतुर्द्धा विभक्ते गोतमाद्युक्ते सकृत्करणं नान्त-
र्निर्विशते किन्त्वपरपक्षान्तरे अस्य च पक्षचतुष्टया
वरुद्धत्वेन निराकांक्षतया सामान्यविशेषन्याये
नान्यत्रैव गोतमादिविश्रामासिद्धेः । अत्र च निब

न्धृणामविवादएव। एतेन केवलामावास्याप्यपास्ता न्यायसाम्यात् अष्टकात्रयोदश्यौतु नैवं निरवकाशत्वादिति। अत्र यद्यपि प्रतिपदादिकल्पेन पक्षश्राद्धे क्रियमाणे अमावास्यान्तस्य नित्यस्य श्राद्धकलापस्यैककर्मीभूतस्यैकप्रयोगसाध्यत्वेनादौ सर्वसङ्कल्प आयाति वाक्यार्थीभूतनियोगस्यैक्याद्दर्शवत्। प्रतिदिनन्तु नायाति तत्तच्छ्राद्धानां प्रत्येकं कलिकापूर्वजनकत्वादैन्द्रदध्यादिहोमवत् तथापि प्रतिमासिकवत्प्रत्यहं सङ्कल्पमाचरन्ति आदौ तु षोडशश्राद्धवत् सर्वसङ्कल्पं नाचरन्ति वृद्धाः। अत्र चाचारमात्रं मूलमाद्ये, अन्त्ये तु नित्यतेति ब्रूमः। आश्विनापरपक्षवत् शरदि शुक्लपक्षे षष्टिकाभिः पार्वणं नित्यं, व्रीहियवपाकौ चेत्यन्तमभिधाय विष्णुना नित्यत्वाभिधानात् शुक्लपक्षे नवं धान्यमित्यादिना शरत्कृत्यमुपक्रम्यकथनात्। इदञ्च व्रीहिभिः, गृहमेधी शरद्वसन्तयोर्व्रीहियवाभ्यां यजेतेतिवचनात् तदभावेपुराणैस्तदभावेऽन्नान्तरेणापीति परिशिष्टटीका। एवं हैमन्तिकसंस्कारकमपिपार्वण मावश्यकं। अकृताग्रयणञ्चैव धान्यजातं द्विजोत्तम। राजमाषानणूंश्चैव मसूराँश्च विवर्जयेदिति वचनेनाकृतनवान्नश्राद्धानां सस्यानामकर्मण्यत्वप्रतिपादनात्, पारिजातोप्येवम्॥

तच्च श्राद्धन्न हरिशयने न धनुस्थे नापि तुलास्थे रवौ न च कृष्णपक्षे, नवान्नं नैव नन्दायां न प्रसुप्ते जनार्दने। न कृष्णपक्षे धनुषि तुलायान्नैव कारयेदिति ज्योतिर्वचनात्॥ इदञ्च श्राद्धं वृश्चिकत्रयोदशांशाभ्यतरएव तदुत्तरमेव धनुरयनात् एवं सर्वराशिष्विति। एवञ्च श्रावणपूर्णिमायांआग्रहायणपूर्णिमायाञ्च पार्वणमावश्यकं श्रावण्याग्रहायण्योरन्वष्टकासु च पितृभ्योदद्यादिति गोतमवचनात्। न चान्वष्टकासहपाठादिदं साग्निमात्रपरं अष्टकाया अपि तथात्वापत्तेः तिस्रोष्टकास्तिस्रोऽन्वष्टका इति स्मरणात् अष्टकाश्राद्धानामग्निव्याप्तोतिकर्त्तव्यताविरहान्न तथेति यदि तुल्यमाग्रहायणी श्रावणीश्राद्धयोरपि। श्रावण्याग्रहायणीपदे च तत्पूर्णिमामात्रपरे तत्रैवसमुदायस्य साधुत्वात् समयप्रदीपादयोप्येवं॥ अथ मृगशिरसा युक्ता मार्गपूर्णिमा एवं श्रवणेन युक्ता श्रावणपूर्णिमा श्राद्धकाल इति तन्नक्षत्रयोगाभावे न श्राद्धमिति मैवं मार्गी श्रावणी पदादीनां तत्तन्मासपूर्णिमामात्रएव साधुत्वात्। नचैवं पुष्ययुक्ता पौर्णमासी पौषीत्याद्यनुशासनविरोधः, तस्य तद्योगयोग्यतापरत्वात् तथैव निबन्धृभिर्लिखनात् अन्यथा माससंज्ञनक्षत्रेण पौर्णमास्याअयोगे तद्वर्षे तन्मास

लोपःस्यात् अतएव पङ्कजपदवत् पौष्यादिपदान्यपि तत्तन्नक्षत्रवत्तत्तत्पूर्णिमासु योगरूढानीत्यपास्तं पङ्कजनिकर्तृत्वयोगवदत्र तत्तन्नक्षत्रयोगस्याना वश्यकत्वात् तत्तन्नक्षत्रयोगयोग्यताश्रयणे तु न नःक्षतिः। एवं माघपूर्णिमायामपि नित्यं पार्वणं, माघीप्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशी चेति विष्णुवचना त्। ननु माघीति कृष्णत्रयोदशी विशेषणं तेनाश्वि नापरपक्षीया त्रयोदशी मघायुक्ता नित्यपार्वणका लइति सिद्ध्यति मैवं एवं हि त्रयोदशीं विशिष न्माघीपदं यौगिकं स्यात् माघपूर्णिमां वदन्रूढं भव ति तथा च योगरूढ्योर्विरोधे रूढिरेव बलवती बृह- स्पतिर्विश्वदेवैरितिवच्च नात्र योगबलवत्त्वप्रयो जकं किञ्चिदस्ति अतएव श्राद्धपञ्ज्यां साग्निनि रग्निसाधारणनित्यपार्वणकालपरिगणनप्रकरणे मार्ग माघ श्रावण पूर्णिमा इति लिखितम्। पारिजा तोप्येवम्। यवपाकश्राद्धं वसन्ते, तदपिनित्यं व्रीहि यवपाकौचेत्युपक्रम्य एताँस्तु श्राद्धकालान्वै नित्या नाह प्रजापतिरिति विष्णुवचनात्। इदञ्च न चैत्रे, नापि कृष्णेपक्षे कार्यं॥ पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः। भवेज्जन्मान्तरे रोगी पितॄणां नोपति ष्ठते इति ज्योतिर्वचनात्। सर्वाणि सावकाशानि श्रा-

द्धानि नन्दादौ न कार्याणि ॥ नन्दायां भार्गवदि ने त्रयोदश्यां त्रिजन्मानि । श्राद्धमेतेष्वकर्त्तव्यं पुत्रदारधनक्षयादिति वचनात् ॥ आश्विनापरपक्षेतु सर्वस्मिन्नहनि श्राद्धं शक्तस्य नित्यम् । कल्पास्तु तत्र चत्वारः,शक्तस्य प्रतिपदादिः,अशक्तस्यपञ्चम्यादिः, अशक्ततरस्याष्टम्यादिः, अशक्तमतस्य दशम्यादिः । अत्र चैककल्पाश्रयणे तदनिर्वाहे न कल्पान्तराश्रयणं यवव्रीहिवत् उदितादिहोमवच्चेति ॥ पक्षचतुष्टये चात्र चतुर्दशीपरित्यागः चतुर्दश्यान्तु कुप्रजा इत्यादिना तन्निषेधात् । ननु तन्निषेधः काम्यचतुर्दशीश्राद्धपरः त्रयोदशीश्राद्धवन्नित्यचतुर्दशीश्राद्धस्य तु दिनेदिन इति सर्वदिनविधिना द्रागालिङ्गनात् । नहि नित्यविधिः काम्यविधिवत्फलमपेक्षते येन विलम्बितप्रतीतिकतया निषेधेन स्पृश्येत तस्मात् त्रयोदशीश्राद्धवच्चतुर्दशीश्राद्धमपि नित्यत्वेन निषेधास्पृष्टत्वात् क्रियतां तत्स्पर्शे तु नित्यं त्रयोदशीश्राद्धमपि हीयतां वा । सेयमुभयतः पाशा रज्जुरिति । अत्र केचित् । आहवेषु विपन्नानां जलाग्निभृगुपातिनां । चतुर्दश्याम्भवेत्पूजा अन्येषान्तु विगर्हितेत्याश्विनापरपक्षप्रकरणस्थदेवीपुराणवचनेनान्येषां सर्वत्र पूजा तदा नि

षिध्यते असङ्कोचादित्याहुः । अत्र वक्ष्यामः ॥ ❀ ❀
अथ श्राद्धशरीरनिर्णयः ॥ अत्र तद्दिने प्रातः स्नान मावश्यकम् । प्रातः स्नातः सहाम्बर इति विशिष्याभिधानात् नतु ततएव तद्दिने स्नानान्तरस्थानेपि तदेव,आघारमाघारयतीतिवदितिवाच्यं सहाम्बर इतिवत् प्रातः स्नात इत्यस्याप्यनुवादत्वात् अनुवादफलं त्वङ्गत्वमेव । श्राद्धवेलायामादौ पुण्डरीकाक्ष स्मरणं । शङ्खचक्रगदापाणिं द्विभुजं पीतवाससं । प्रारम्भे कर्मणां विप्र(ः)पुण्डरीकं स्मरेद्धरिमितिवचनात् । पुण्डरीकमित्येकदेशकीर्त्तनं तेन पुण्डरीकाक्ष स्मरणमायाति तत्स्मरणफलन्तु । गरुडपुराणे । अपवित्रः पवित्रोवा सर्वावस्थाङ्गतोपिवा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिरिति ॥ श्राद्धीयद्रव्यप्रोक्षणञ्च कुशोदकेन, नाप्रोक्षितं स्पृशेदिति वचनात् प्रोक्षणे सिद्धे अन्यत्र तथादर्शनात् एवञ्च पुण्डरीकाक्षस्मरणं श्राद्धीयद्रव्यप्रोक्षणञ्च श्राद्धारम्भसमयकृत्यमित्येकदैव द्वयम्भवति सौकर्यात् न त्वपवित्रइत्यादिश्लोकस्यास्यां क्रियायामन्वयः अनभिधानात् अर्थवादान्तरतुल्यत्वाच्च । एतद-नन्तरन्तुकाम्ये श्राद्धे फलाभिलापपूर्वकः सङ्कल्पः काम्ये फलाभिलापपूर्वकः सङ्कल्पः शास्त्रार्थ इति

स्वशब्दादिशब्देन देशनादेशितस्य त्यागस्यैवाभिधा-
नादिति अतएव श्राद्धकल्पपितृभक्तिश्राद्धप्रदी-
पादयोप्येवम् ॥ कराग्राग्रपवित्रकत्वमाभ्युदयिक
एव छन्दोगपरिशिष्टे विशेषाभिधानस्वरसादिति
न वाच्यं नैकैकस्यात्रदीयत इति तदुपसंहारात्
मिलितदानस्यैव विशेषस्य तत्राभिधानादिति ।
अर्घसंस्रवदानन्तु पितृपात्रे पितामहपात्रोपक्रमेण
प्रावृत्तिकक्रमानुरोधात् । शेषं श्राद्धचिन्तामणौ ।
होमस्तु पिण्डपितृयज्ञवत् कात्यायनेनोक्तः पिण्डपि
तृयज्ञे च होमः प्राचीनावीतिना कार्यः सजघनेन
गार्हपत्यं प्राचीनावीतीभूत्वा दक्षिणासीनइत्युपक्रम्य
सउद्धास्य द्वे आहुती जुहोति सजुहोत्यग्नये कव्यवा
हनाय स्वाहा सोमाय पितृमते स्वाहेति शतपथदर्श-
नात् इदन्तु माध्यन्दिनीयानाम् ॥ सामगानान्तु
सव्येन, अतः परं प्राचीनावीतिना भाव्यमिति होमान
न्तरं गोभिलात् अत्र होमे जलादौ क्रियमाणे पर्यु
क्षणन्नास्ति अनभिधानात् नच यज्ञोपवीती निर्वर्त्य
ततः पर्युक्षणादिकमितिवचनात्तत्स्यात् स्वगृह्योक्तेन
विधिनेति तत्र स्मरणात् गृह्ये चाग्नावेव पर्युक्षणकथ-
नात् । उपवीतिना सकार्यइति पितृभक्तौ लिखितं
तच्च शतपथविरुद्धं पितृभक्तिलिखनमप्रमाणमे

वेति वस्तुगतिः । मैथिलास्तु शतपथादर्शिनः पितृ भक्तिप्रामाण्याभिमानिनोयजुर्वेदोप्युपवीतिनोत्र भवन्तीति ॥ एतद्भुतशेषप्रतिपादनन्तु सर्वथा ऽप सव्येनैव पित्र्यत्वात् । प्राचीनावीतिना सम्यगपसव्य मतन्द्रिणा । पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणि नेतिवचनात् ॥ अपसव्यमिहवाक्ये वामावर्त्तम् । आनिधनात् समाप्तिपर्यन्तं । ततः परिवेषणं, तत्रान्न पूर्णपात्रं हस्ताभ्यामुपनेयं, पाणिभ्यां तु संगृह्य स्वय मन्नस्य वर्द्धितं । विप्रान्तिके पितॄन्ध्यायञ्छनकै रुपनिः क्षिपेदितिवचनात् ॥ उपनिः क्षिपेत्समीपे धारयेत् । परिवेषणन्तु दक्षिणपाणिमात्रेणैव, अङ्गा नभिधानात् ॥ कर्मोपदिश्यते यत्र कर्त्तुरङ्गन्नचोच्य ते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः कर इति वचनात् ॥ श्राद्धपञ्ज्यप्येवम् ॥ इदञ्च परिवेषणं नित्यश्राद्धेपि प्रकृतावभिहितत्वे सति नित्यश्राद्धे ऽनपोदितत्वात् । अन्ने च मधुनि क्षिप्ते मधुमत्येव पठनीया नतु मधु मधु माध्वित्यपि प्रमाणाभावात् नच मधुवातेति मन्त्रितमित्यनेन मधुवाताशब्द मात्रं गृह्यते किन्तु ऋक्त्रयं मधुप्रकाशकत्वात् तथाच मधु मधु माध्वित्यपि ततएव ग्राह्यमितिवाच्यं मधु माध्विति यस्तत्र त्रिर्जपोशितुमिच्छताम् । गा

यत्र्यनन्तरं सोत्र मधुमन्त्रविवर्जितइत्यनेन मधुमतीनामेव मधुमन्त्रत्वेनाभिधानेन मधुवातेतिमन्त्रिततमित्यत्रापि मधुमन्त्रत्वेन ता एवायान्ति किञ्च ऋतमित्यभिमन्त्रितमित्यादौ इतिना स्वरूपग्राहकेणापि समस्तस्यैव मन्त्रस्य ग्रहणदर्शनात् मधुवातेतिमन्त्रितमित्यत्रापि सकलैव मधुमतीगृह्यते नतु ततोत्यन्तविप्रकृष्टाध्यायस्थं मधुमधुमध्वित्यपि मधुमतीभ्योऽन्यत्वादिति ॥ पिण्डनिर्वपणञ्च, वामान्वारब्धदक्षिणकरेण, पिण्डान्निदध्यात्सव्येन पाणिना दक्षिणमुपधायेति शङ्खवचनात् ।उपधायअन्वारभ्येति तदर्थात् ॥ श्राद्धकल्पोप्येवं ॥ पाणिभ्यामिति (त्व)तुल्यद्वारत्वेपि क्षौमे वसानावितिवत् । अथ तत्रानया सहेत्यनुरोधात्तथा यदि तदा अत्रापिशङ्खसूत्रानुरोधात्तथेति तुल्यम् ॥ यत्तु अर्घाक्षय्योदकपिण्डावनेजनस्वधावाचनवर्जं मिलितानां पित्रादीनां त्रयाणां देवतात्वमन्यत्र तु सर्वत्र प्रत्येकमेव देवतात्वम् तदुक्तम् । अर्घेऽक्षय्योदके चैव पिण्डदानावनेजने । तन्त्रस्य विनिवृत्तिःस्यात्स्वधावाचनएव चेति तन्न एतद्वचनस्य राजाद्यलिखितत्वेन निर्मूलत्वादिति ॥ अत्रच श्राद्धिषु भोक्ष्यमाणेषु भुञ्जानेषु भुक्तवत्सु च स्थानत्रये गायत्री मधुमती मधु मधु मधु जपः कात्या

यनयाज्ञवल्क्योक्तः सच नानाशास्त्रोक्तोपि समुच्ची-
यते कर्मणएकत्वेन प्रत्यभिज्ञायमानतया नाना-
शास्त्रोक्तेतिकर्त्तव्यतानां समुच्चयस्याकांक्षाबलेन
शास्त्रार्थत्वात् न चैवं श्राद्धकल्पादिलिखनाविरोधः
तस्य कात्यायनकण्डिकामात्रानुवादत्वात् अन्यथाऽ
र्घपिण्डविभागयोरपि मन्त्रान्वयोनस्यात् तदलिखि
तत्वात् । ओमितिचेत् न येसमाना इति द्वाभ्या
माद्यन्तुविभजेदित्यादिनाऽन्येन तत्र मन्त्रान्वयस्य-
दर्शितत्वात् कर्मणश्चैकस्य सर्वशाखाश्रयत्वेनैकत्र
सर्वान्वयस्य शास्त्रार्थत्वात्। अतएव छन्दोगसोपाने
वृषोत्सर्गप्रकरणे नानाशास्त्रोक्तानामितिकर्त्तव्यता-
नां समुच्चयः श्राद्धवदिति प्रतिहस्तकाअप्याहुः ॥
ननु समवेतार्था मन्त्रास्तादृशपदवन्तः कृत्वा पठ्यन्ते
अतएवाग्नये त्वा जुष्टन्निर्वपामीत्यत्र सूर्याय त्वा जुष्टं
निर्वपामीति देवतोहइति नवमेऽध्याये सिद्धान्तितं
तथाच एकवचनवन्मन्त्रानूहेतैकोद्दिष्ट इतिविष्णुव-
चनेन समवेतार्थके मन्त्रे एकोद्दिष्टे प्रयुज्यमाने एक
वचनोहस्तेन नमस्तेपितारसायेत्यादिसिद्ध्यति। ननु
एतत्ते पितर्वासइति कथम्, एतद्वः पितरोवासइति
तु प्रकृतावेवासमवेतार्थमेतद्वः पितरोवासइति ज-
ल्पन् पृथक् पृथगितिस्मरणात् अतएव दक्षे पशावेक

पाशिकायां रज्जौ प्रकृतौ अदितिः (स्वधितिः) पाशं प्रमुमोक्तु अदितिः (स्वधितिः) पाशान् प्रमुमोक्विति ान्त्रद्वये द्विपाशिकायां विकृतौ प्रयुज्यमाने एकवचनान्तस्य मन्त्रस्य द्विवचनोहः प्रकृतौ समवेतार्थत्वात् बहुवचनान्तस्य तु नोहः प्रकृतावेवासमवेतार्थत्वादितिसिद्धान्तः । तत्कथमत्रैकवचनोहोस्त्विति, अत्राहुः अस्य हि प्रकृतावसमवेतार्थत्वं एतद्वः पितरोवास इति जल्पन् पृथक पृथगिति वाक्यान्तरवशेन, तत्तु वाक्यं पृथक् पृथगिति वीप्साबलेन पार्वणमात्रविषयकं तेन तन्मन्त्रस्थबहुवचनस्य पार्वणप्रयोगएव साधुता नत्वेकोद्दिष्टेपि, तत्र वीप्सासहितवाक्याप्रवृत्तेः अतएव पितरः शुन्धन्तामित्यादि प्रकृतौ स्वभावतएव प्रयोगसाधौ बहुवचने एकोद्दिष्टेपि पितरः शुन्धन्तामित्येव प्रयोग इतिदिक् ॥ छिन्नमूल कुशास्तु वाजसनेयिनां त्रय एव कपिञ्जलन्यायात् पितृभक्त्यादयोप्येवं छन्दोगानान्तु मुष्टिमितास्तेन बहवः मुष्ट्यां संख्यानभिधानात् । श्वासधारणन्तु क्लान्तिपर्यन्तंकर्त्तव्यं तथाच पिण्ड पितृयज्ञे कात्यायनः। अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनादावृत्यामीमदन्तेति जपति ॥ आतमनात् तमनपर्यन्तम् ॥ शतपथोऽपि । सवाआतमितोरासीतेति ॥ आतमि-

नोरितिछान्दसस्तोसुन्प्रत्ययः तेन तमिपर्यन्तं क्रान्तिपर्यन्तमित्यर्थः । दक्षिणावाक्यन्तु सपात्रके निर्विवादमेव, अपात्रके तु दक्षिणामहं ददइति कार्यं नतुदातुमहंसमुत्सृज्य इति ददातेः समुत्सृज्यतेश्च इच्छैव शक्येतिन्यायमतं, फलमेव शक्यमिति भट्टमतं, व्यापार एवशक्य इति गुरुमतं, सर्वत्रचानन्वयः नहीच्छांकर्त्तुं इच्छांकरोमीत्यादि घटते नच दातुं परगामिकर्त्तुं उत्सृज्ये त्यजामीत्यर्थः, दातुमित्यत्र लक्षणापत्तेः स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्तेर्द्दानफलस्य-ददात्यर्थेच्छोपलक्षणत्वोपगमात् विशेषणत्वेऽपि लक्षणैव, विशिष्टशक्तस्य विशेषणमात्रपरत्वात् नच-स्वायत्ते शब्दप्रयोगे लक्षणोचितेति ॥ छन्दोगानान्तु श्राद्धशेषे वामदेव्यस्य साम्नोगानं, वामदेव्यं गीत्वा गृहं प्रविशेदिति गोभिलवचनात्, नतु कयान इत्यादेर्ऋचः पाठः तस्याः सामत्वाभावात्, गीयमानानामेव ऋचां सस्तोभानां सामत्वादिति ॥ अथ पार्वणनिरूपणनन्तरं तद्विकृतिभूतैकोद्दिष्टनिरूपणे आदावाद्यश्राद्धनिरूपणम् । तत्र चाद्य श्राद्धं मासिकानि चतुर्द्दश सपिण्डीकरणञ्चेत्येकः कल्पः मरणाच्चतुर्थदिने पञ्चमदिने नवमदिने चैकादशदिने चैकोद्दिष्टं तेनैतानि चत्वारि, मासि-

कानि च द्वादशेत्यपरः कल्पः । एतौ तु विकल्पितौ एकस्मिन्नेव फले कल्पद्वयोर्नैरपेक्ष्येणाम्नातत्वात् यस्य तु सपिण्डीकरणानिषेधः तस्य पारशवस्य अवीरायाश्च द्वितीयएवकल्पः अत्र द्वितीयकल्प एकादशदिने यच्चतुर्थश्राद्धं तत्र तत्पूर्वसमये शय्याकाञ्चनपुरुषकपिलगवीदानानि अशौचान्ता द्वितीयेऽह्नीत्यसङ्कुचितश्रवणात् तथा आद्यकल्पेन पुत्रादिना प्रयोगे क्रियमाणे तदैवैतानि त्रीणि। वृषोत्सर्गकरणपक्षे तु ततः प्राग्दम्पतिपूजनमपि, सम्पूज्येत्यनेन दम्पतिपूजनवृषोत्सर्गयोरानन्तर्य प्रतीतेः तदपि द्वयोर्मिलनमेकादशाहीय वृषोत्सर्ग एव अशौचान्ताद्द्वितीयेह्नीत्युपक्रम्य संपूज्य द्विज दाम्पत्यं वृषोत्सर्गं कुर्वीतेति कथनात् । बृहति (प्र) स्तूयमाने समुद्रं ध्यायेत् । रथन्तरे पृथिवी मितिवत् विशिष्यैवाम्नानात् ॥ ननुक्त्वाबलादनयोरङ्गाङ्गि भाव एवास्त्विति चेत् न त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीत्यत्रापि यूपपरिव्याणस्य पशूपाकरणाङ्गतापत्तेः । तदुभयमप्याधिकृताधिकारिकत्वादङ्गमिति चेत् हन्त तर्हि एतदुभयमपि

(१) बृहति प्रस्तूयमाने समुद्र मनसाध्यायेत्, रथन्तरे प्रस्तूयमाने समीलयेत् ॥ इतिपाठेमीमांसा ग्रन्थेषु ९ अ- २ पा- दृश्यते ॥

अधिकृताधिकारितया अधिकारिसाकांक्षत्वेन स-
मसमयाधिकारिकल्पनक्षमत्वेन प्रधानमस्तु क्त्वा
चानन्तर्यमात्रे नत्वङ्गाङ्गिभावे फलवत्त्वेनोपस्थित-
स्य सन्निधौ श्रूयमाणं यदफलत्वेनोपस्थितं तदेवा-
ङ्गमिति सिद्धान्तात्॥ इदन्तु शय्यादानादिकमशौ
चान्तश्राद्धात्प्राक्तद्दिनएव कार्यं तेन सद्यः शौचे
तद्दिनएव पूरकापिण्डशय्यादिदानाद्यःश्राद्धानि भ-
वन्ति न चाशौचान्ताद्द्वितीयेह्नीति श्रवणात् द्वि-
तीयादिने शय्यादानं नतु तद्दिन इति वाच्यं अशौ
चव्यपगमइति विष्णुवचनेन सद्यः शौचे तदहरे-
वाद्यश्राद्धस्य कर्त्तव्यत्वे सिद्धे। अञ्जनं कङ्कतं
गृह्य शय्यामाक्रम्य वै द्विजः। मुहूर्त्तन्तत्र विश्र-
म्य निवापस्थानमागतइत्यादिना वराहपुराणवच-
नेन श्राद्ध पूर्वदत्तशय्यायाः श्राद्धोत्तरं विनियो
गप्रदर्शकेन तद्दिन एव श्राद्धात्प्राक् शय्यादान-
स्यापिसिद्धेः॥ ननु मलमासवदत्र शय्यादिदानबाध
एवास्तु, द्वितीयदिनत्वस्य विवक्षितत्वादितिचेन्न
अशौचाभावमात्रस्यैवाधिकारार्थमपेक्षितत्वेन त-
न्मात्रस्यैव वक्तव्यत्वात् द्वितीयत्वन्तु संपूर्णाशौच-
परतयैवोक्तम् अविवक्षितञ्चा न च द्वितीयपदानुरो-
धादाद्यमेकादशेऽहनीत्यादेश्च सद्यःशौचेऽप्युन्तर

दिनएव शय्यादिदानं श्राद्धञ्चेति युज्यते समर्थस्य क्षेपायोगात् । एकादशाहपद न्त्वशौचाभावमात्रपरम् अन्यथाऽशौचस्य ह्रासे वृद्धौ च तल्लोपः स्यात् । तस्मादशौचव्यपगमइत्येव सारम् ॥ नच सद्यः शौचेऽपि दिनव्यापकमेवाशौचं, अस्यैकाहभिन्नत्वात् सद्यः शौचन्तथैकाहस्त्र्यहश्चतुरहस्तथेत्यादिपरिसंख्यानात् ॥ ॥ अथ वृषोत्सर्गः ॥ तत्रादावधिकारिनिरूपणम् । तत्र शय्यादानाधिकार्येव वृषोत्सर्गेप्यधिकारी पञ्चानामपि युगपदुपस्थितावविशेषेणैकाधिकारिकत्वकल्पनात् । तथा च पत्न्याअपि पति वृषोत्सर्गेऽधिकारइति मैवं तत्करणीभूतायामृचि-ददानीतिश्रवणात् तस्यायाजमानत्वासिद्धावनृचि स्त्रियां तद्बाधेन यागवद्वृषोत्सर्गस्यापि बाधात् शूद्रस्य तु कृष्णेनाप्यन्त्यजन्मनइति विशेषोपदेश बलेन रथकारवदधिकारसिद्धौ तदनुकूलविद्याप्रयुक्तिरपि शूद्रस्य रथकारवदेव कल्प्यते । नच तण्डुलपदवदहःपदवच्चान्त्यजन्मपदमविवक्षितस्वार्थं तेनाविद्यमात्रवाचकमतः स्त्रीणामप्यधिकारइति वाच्यं तत्र हि यस्य निरुप्तं हविश्चन्द्रमा अभ्युदियात् सत्रेधा तण्डुलान्विभजेदिति श्रुतावपि देवतातोहविर्विभजेदिति सामान्यश्रवणादयुक्ता

तण्डुलपदस्य हविःसामान्यपरता । एवं प्रजाका मागवामयनमुपेयुरितिश्रुतं तस्य चाहर्गणत्वादद्वा दशाहविकृतित्वेन तद्वदहर्गणपूरणे अहस्त्वविवक्षा-याऽभिमता ऽऽग्रयणाग्रता न स्यादिति तदविवक्षा । अत्र तु न तद्वत्किमप्यनिष्टमापतति येनान्त्यजन्म पदमविवक्षितस्वार्थं स्यादिति । हन्त तर्हि शूद्रस्य प्रधानाधिकारसिद्धौ रुद्रजपादिकमपि कल्प्यताम-ङ्गत्वाविशेषात् एतयैवोत्सृजेरन्निति कात्यायनवच-नेनापि सर्वेषामेव वृषोत्सर्गकर्तॄणामयमेव वृषो त्सर्गकरणीभूतोमन्त्रइति नियम्यते नतु मन्त्रान्तरं निरस्यत इति तस्माच्छूद्रेणापि त्रैवर्णिकवद ङ्गीभूतसकलमन्त्रसहितएव वृषोत्सर्गः करणीय इति । मैवं श्रम्ये हि करणीभूतस्य विषयत्वं तेन फल करणीभूतसकलाङ्गसम्पन्नमपूर्वन्तत्र विध्यर्थः तेन देशनाश्रुतौ रथकारआदधीतेत्यादौ युक्ता सकलाङ्गा नुष्ठानकल्पना श्रूयमाणविधेस्तावति विश्रान्तेः अत्र तु श्रूयमाणोविधिर्नास्त्येव वृषोत्सर्गं कुर्वीतेत्यस्य हि स्वर्गकामोयजेतेतिवदमन्त्रकतया शूद्रादौ सङ्कोचा-त् किन्तु वृषविशेषोपदेशान्यथानुपपत्त्या शूद्रस्या-धिकारः कल्प्यते तथा चाधिकारबलात्तत्कर्मानुष्ठानं नतु सकलाङ्गानुष्ठानं करणविषयकापूर्वानभिधाना-

त् ॥ हन्त कार्य्यापूर्वानुपस्थितौ न प्रवृत्तिः ममेदं कार्यमितिकार्यताज्ञानस्यैव प्रवर्त्तकत्वात् ननु ममेदं कार्यमिति ज्ञानमेव प्रवर्त्तकं तच्च वेदादेव तथा च शूद्रस्यापि प्रवृत्तये विधिकल्पनमेवेतिचेत् गुरुमतमेतत् । किञ्च कल्पितोहि विधिर्नानुभावयितुमलं सामग्रीविरहात् तस्मात्क्वचिद्विधिजन्यं क्वचिदर्थवादजन्यं क्वचिच्च न्यायजन्यं कृतिसाध्येष्टसाधनताज्ञानं प्रवर्त्तकमिति । उत्सर्गकरणीभूतायाश्च ऋचः पाठे शूद्रस्याप्यधिकारएव एतयैवोत्सृजेरन्निति वचनबलात् ॥ अत्र च ब्रह्मवरणमादौ, षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्ट्राग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतॄन्वृणीतइति श्रौतकात्यायनसप्तमाध्यायसूत्रदर्शनादणोरपि विशेषस्याध्यवसायकरत्वात् ॥ विष्णुः॥ एकस्मिन्पार्श्वे चक्रेणापरस्मिन शूलेनाङ्कितमिति अत्र शूलन्तु दक्षिणे पार्श्वे वामे चक्रं विनिर्दिशेदितिवचनादङ्कनमेवमिति यत्तद्रत्नाकरं तत्पद्धताविव (तथा) लिखनात् किन्तु चक्रं दक्षिणे वामे शूलं दक्षिणभागस्यैव प्रथमप्रतीतत्वात् अतएव दक्षिणपार्श्वे चक्रेण तत्सजातीयवामपार्श्वे त्रिशूलेनेतिप्राञ्चोपि तत्सजातीयवामपार्श्वयोरित्यत्र कर्मधारयोनतु षष्ठी-

समासोलक्षणापत्तेः व्यत्यस्तग्रहणे बीजाभावाच्च ॥ अ
तएव पुरोभागस्य प्रथमप्रतीततया पुरोवर्त्तिन्येव चर
णद्वयेऽङ्कनम् । यत्तुस्फिचोरङ्कनामितिबह्वृचपद्धतौ
लिखनं तद्यादिसमूलंतदापि तत्परमेव, यजुर्वेदिभिः
सर्वैरेवानादरणात् । स्वधा पितृभ्य इत्यादिमन्त्रस्तु
शूद्रेणाप्येवमेव पठनीयः नमःपदोहे हेत्वभावात् ॥
नचास्य स्वधाशब्दस्य त्यागार्थकतैव तत्र हेतुरिति
वाच्यं तथा सति हि स्वधोदीरणानुपदमेवाञ्जलि
त्यागः स्यात् सामगाग्नौकरणवत् पश्चात्तु मन्त्र
समापनं स्यात् । स्वधा पितृभ्यो मातृभ्य
इत्यादिब्रह्मपुराणवचनात् आत्मानञ्च पितॄँश्चा
थ पत्नीर्मातामहान् सुतानित्यादिकार्ष्णाजिनि
वाक्याच्च पुङ्गतत्त्ववत् स्त्रीगतत्वेनापिफलस्या
वगमात् स्त्रियाआपिवृषोत्सर्गः । अतएव विगोत्रा-
णांमपि वृषोत्सर्गः । अत्र पारस्करे चतस्रोवत्स-
तर्यइत्युक्तम् विष्णुसूत्रे च । ब्रह्मपुराणे तु धेनुपदं
तदपि त्रिहायणीपरमेव, अष्टाभिर्द्धेनुभिर्युक्तश्चतु-
र्भिरथ वा क्रमात् । त्रिहायणीभिर्द्धन्याभिः सुरूपा
भिः सुशोभित इति तद्वचनात् । आदित्यपुराणे तु,
त्रिवर्षास्त्वथगुर्विण्योदद्याद्वावोवृषस्य तु । अत्र
गुर्विण्यइतियौवनपरमतोन विरोधः ॥ त्यागमन्त्रे

नूपदेशएव शरणं तत्पाठस्य बहुप्रकारश्रुतेः । अत्रा-ज्यं संस्कृत्येति वचनादाज्यसाध्याश्चतुर्दशाप्या हुतयोभवन्तीति कर्कोपाध्यायाः । आज्यं संस्कृ-त्येहरतिरितिषड्जुहोतीत्यनेनानन्तर्योपस्थितेराज्य-संस्कारानुपदमेव रत्यादिषडाहुतयः । रुद्रहोमे त्वग्नये स्वाहेत्यादय एव मन्त्राइत्यपि तएव । पाय-सपौष्णयोरुत्तरार्द्धावदानेन स्विष्टकृद् अग्नीषोमी-ये तथादर्शनादत्र च तद्धर्मातिदेशादित्यपि तए-वेति ॥ परिस्तरणन्तु ऐशान्यामुपक्रम्य उत्तरस्या मुपक्रमसमीपे समापनीयं ऐशानीतः सौम्यान्त मिति श्रौतकात्यायनसूत्रे परिस्तरणमात्रे निर्ग-लितत्वात् परिभाषाहारिहरपद्धत्यादयोऽप्येवम् ॥ रुद्रहोमे च रुद्रस्य पञ्चमी संज्ञा अशनिरिति शतपथे षष्ठकाण्डे तृतीयब्राह्मणे नवमकण्डिकायां रुद्रजन्म प्रकरणे रुदता रुद्रेणाष्टकृत्वोनाम्नि प्रार्थिते रुद्रः सर्वः पशुपतिरुग्रोऽशनिर्भवोमहादेवईशानइति नामानि ब्रह्मणा रुद्रोऽसीत्यादिक्रमेण दत्तानीत्याम्नानात् । विद्युदशनिरिति तत्रैव विवरणाच्च । न चैतद्भिन्नएव वृषोत्सर्गेऽशनोदेवता । वृषोत्सर्गोगोयज्ञेन व्याख्यात इति कात्यायनेन वृषोत्सर्गे गोयज्ञियदेवताद्यतिदे-शात् गोयज्ञे च तेनैव स्थालीपाकमिश्राण्यवदानानि

जुहोत्यग्नये रुद्राय सर्वाय पशुपतयउग्रायाशनये भ-
वाय महादेवायेशानायेति शूलगवेऽभिधाय एतेनैव-
गोयज्ञोव्याख्यात इति सूत्रणादेवमेव हरिहरवासुदे-
वगोसवादिलिखनाच्चेति । (सर्वश्चायं दन्त्यादिर्दे
वता, तमब्रवीत्सर्वोऽसीति तद्यदस्य तन्नामाकरोदा
पस्तद्रूपमभवन्नापोवै सर्वोह्यद्भ्योहीद१९ सर्वञ्जायत
इति रुद्रनामप्रकरणे शतपथात्) शूलगवे च रैद्रं प
शुमालभेतेतिवचनादग्नीषोमीयधर्मग्राहिता । त-
दयं संक्षेपः । शूलगवे मांससाध्या अग्न्यादिरुद्राहु-
तयः गोयज्ञेपि ताएव पायससाध्याः । अतोवृषोत्सर्गेऽ
पि ताएव पायसेनेति ॥ अत्र तु सिद्धस्यैव पौष्णस्या
सादनं, आज्यं संस्कृत्येत्याज्यसंस्कारमुपदिश्य पूषा
गाइति पौष्णस्य जुहोतीति वृषोत्सर्गे कात्यायनेन
तदानीं पौष्णस्य होममात्राभिधानात् ॥ यत्त्वग्निं प-
रिस्तीर्य पौष्णञ्च श्रपयित्वेतिविष्णुनोक्तं तत्कठ
शाखिपरं तस्य तत्सूत्रकारत्वादिति । फलन्तु एका
दशाहीयवृषोत्सर्गे शय्यादितुल्यतया निष्फलत्वेनो
पस्थिते स्वर्गीयफलाकाङ्क्षापूरणाक्षमत्वेन सतोवृ-
षोत्सर्गार्थवादस्याकाङ्क्षाविरहादनुपस्थितौ विश्व
जिन्न्यायात् शय्यादिपञ्चसाधारणः स्वर्गः । केव
लोपस्थितस्य तु तस्य प्रेतलोकविमुक्ति स्वर्गलोका

वासीअपि। आश्वयुजी कार्त्तिकीचैत्रीरेवत्येकादशाहा दिसाधारणन्तु वृषोत्सर्गफलं बहुप्रकारकमप्सरः सह क्रीडनादि, तस्यैव प्राकरणिकत्वात्। मोक्षस्तु नील वृषोत्सर्गे तत्तल्लक्षणकवृषोत्सर्गे च फलम्, नतु वृषो त्सर्गमात्रे। एष्टव्याबहवः पुत्रायद्येकोपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलव्वा वृषमुत्सृजेदितिवचनेन नीलवृषोत्सर्गस्य गयाश्राद्धाश्वमेधसमफलत्वप्रति पादनात्॥तथा॥एवं वृषं लक्षणसन्नियुक्तं गृहोद्भवं क्री तमथापि राजन्। मुक्त्वा न शोचेन्मरणं महात्मा मोक्षे गतिञ्चाहमतोभिधास्य इतिवचनाच्च। मोक्षग- तिश्च पितुरेव अत एव तन्मरणं न शोचनीयम्। यत्तु मोक्षे मतिमिति पठित्वा साच मतिर्वृषोत्स्रष्टुः पुत्र स्येति कैश्चिदुक्तं तदयुक्तं तथासति पितृमरणस्या शोच्यतायां बीजस्यानभिधानादिति॥ मलमासे तु श्राद्धे क्रियमाणे शय्या काञ्चनपुरुष कपिलगवी दानानि दम्पतिपूजावृषोत्सर्गौ च नभवन्ति। मलं वदन्ति कालस्य मासं कालविदोधिकम्। नेहेतात्र विशेषज्यामन्यत्रावश्यकाद्विधेरितिवचनात्। आवश्यकञ्च नित्यममावास्याश्राद्धादि, नैमित्तिकं ग्रहोपरागश्राद्धादि, काम्यमप्यहरहः कर्तव्यत्वेन यत्सङ्कल्पितं, एतन्त्रितयमावश्यकमिति तदपि का-

र्यं एतान्त्रितयभिन्नन्तु शय्यादानादीति तन्न कार्यम् । एवं छत्रोपानहृानादिकमपि न कार्यं काम्यत्वात् नचाद्यश्राद्धप्रयोगान्तर्गतत्वात्तत्कार्यमितिवाच्यं प्रयोगविधिना हि असम्बद्धव्यवायदोषोऽपनीयते यथा स्नानतर्पणयोर्मध्ये संध्यावन्दनप्रयोगविधिना तदसम्बद्धव्यवायदोषापनोदः नतु प्रयोग विधिबलादवश्यकर्त्तव्यता अन्यथा चन्द्रोपराग स्नानेपि सन्ध्यावन्दनं स्यात् प्रयोगविध्यनुरोधा दिति ॥ मासिकं सपिण्डीकरणञ्च यद्यप्यवश्यकर्त्तव्यमपि सम्भवत्कालान्तरं मलमासेऽपि क्रियत एवेति न नियमः तथापि मलमासेऽपि तत्कार्यं, तथैव मासिकं पूर्वं सपिण्डीकरणन्तथेतिविष्णुवचनात् । एवं प्रथम वार्षिकमपि द्वादशमासस्य मलमासत्वे मलमासेऽपि कार्यम्, असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं पूर्वं सपिण्डीकरणं तथेतिवचनात् एवं जातकर्माभ्युदायिकमेकादशाहश्राद्धमशौचादिना पतितं सांव्वत्सरिकश्राद्धञ्च मलमासेऽपि कार्यं । जातकर्मणि यच्छ्राद्धं नवश्राद्धन्तथैवच । प्रतिसव्वँत्सरश्राद्धं मलमासेऽपि तत्स्मृतमिति परिभाषायां ज्योतिर्वचनात् प्रतिसव्वँत्सरश्राद्धमशौचात्पतितञ्च यत्तन्मलमासेपिकार्य मितिपरिभाषादौ व्याख्यानात्।

तीर्थस्नानस्य तु काम्यैकरूपतयामलिम्लुचे निषेधे सिद्धे ऽपि तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव-चेति यः प्रतिप्रसवः सआवृत्ततीर्थस्नानस्य काम्यत्वेन फलाजनकस्याप्यनिष्टाजकत्वमात्रपरः। मलिम्लुचेप्यनावृत्तं तीर्थस्नानमपित्यजेदिदन्तु वचनमनावृत्ततीर्थस्नानस्य फलाजनकत्वे सत्येवानिष्टजनकत्वपरमिति ॥ कूष्माण्ड्यश्च यद्देवा देवहेडनमित्याद्या अग्निवायु सूर्यदेवताकास्तिस्र ऋचः। यद्देवास्तिस्रोग्निवायुसूर्यदेवत्याः क्रमेणानुष्टुभः कूष्माण्ड्य इति सर्वानुक्रमणीदर्शनात्। यत्तु तैत्तिरीयप्रसिद्धं कूष्माण्डसूक्तं कूष्माण्डीभ्रमेणेह कैश्चिल्लिखितं तदयुक्तं नहि सा कूष्माण्डी ऋक् किन्तु कूष्माण्डं सूक्तं, तडागोत्सर्गे चातुश्चरणेन क्रियमाणे दक्षिणद्वारिजप्यत्वेन विहितं। नचैताएव तत्र जप्यन्तामितिवाच्यं एतासां सूक्तत्वानभिधानात् किञ्च तैत्तिरीयोक्तं याज्ञवल्क्येनोद्गीर्णं तच्च न माध्यन्दिनीयै राश्रीयते अतएव दक्षिणद्वारे तैत्तिरीयकाएवजापकाः। अतएवाघमर्षणसूक्तं तैतिरीयोक्तमपहाय ऋग्वेदोक्तं वाजसनेयिभिराश्रीयते। कूष्माण्ड्यस्तु स्वशाखाम्नाता एवकथं परिहीयन्तामिति ॥ अत्र च ऋष्यादिकमाभिधाय, एतान्यविदि-

त्वा योधीतेऽनुब्रूते जपति जुहोति यजते याजयति तस्य ब्रह्म निर्वीर्यं यातयामं भवति, अथ विज्ञायैतानि योधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जप्त्वाहुत्वेष्ट्वा तत्फलेन युज्यत इति सर्वानुक्रमण्यां कात्यायनेनाभिधानात् ऋषिदेवता छन्दो विनियोगानां ज्ञानमावश्यकं अतएव गोमवपद्धतौ तच्चतुष्टयमपि लिखितं ॥ एतच्च कर्म कार्तिकीचैत्री रेवत्याश्वयुजीषु चतसृष्विति ॥ एतच्चतुष्टयन्तु प्रथमाब्दिकातिरिक्तमिहग्राह्यं, प्रथमाब्दे आभ्युदयिकाङ्गककाम्य कर्मनिषेधात् एकादशाहे तु तद्विधेर्निरवकाशतया अगत्यैवाभ्युदयिकाभावेपि वृषोत्सर्गसिद्धिः ॥ आभ्युदयिकं चात्रेष्टित्वेनावश्यकम् ॥ कार्तिक्यां तु वृषोत्सर्गात् प्राक् अपूपत्रयदानमपि कार्तिक्यामपूपान्दत्वेति विशेषश्रवणात् ॥ तदथ मत्रानुष्ठानक्रमः । ओं अद्य कार्तिक्यां चैत्र्यां वा अमुकगोत्रस्य पितुरमुकशर्मणो मोक्षकामः सोपकरणवत्सतर्यष्टतयसहितनीलवृषोत्सर्गमहंकरिष्ये ॥ यथोक्तलक्षणवृषान्तरोत्सर्गेनीलपदमपहाय, वत्सतरीचतुष्टयपक्षे अष्टतयपदस्थाने चतुष्टयपदं प्रक्षिप्य इदमेव वाक्यम् । प्रेतलोकविमुक्तिस्वर्गलोकप्राप्ती तु नात्र फलं ॥ अहन्येकादशे प्राप्ते यस्य चोत्सृज्यते

वृषः । प्रेतलोकाद्विमुक्तः सस्वर्गलोकं समश्नुत इति विशिष्यैवाम्नानात् ॥ विश्वजिन्न्यायसिद्धस्तुस्वर्गः कार्तिक्यादावप्यविरुद्ध एव कर्मण ऐक्यात् कर्मण एव च फलान्वयात् विशेषबाधकाभावाच्च ॥ न चार्थवादस्यैव बाधिकेतिवाच्यं विश्वजिन्न्याय प्रवृत्तिकाले केवलवृषोत्सर्गार्थवादस्याकांक्षाविरहेणानुपस्थितेः तत्सत्ताया अपिव्यर्थत्वादिति ॥ कार्तिक्यामपूपत्रयदानं तच्च प्रधानसङ्कल्पमातृ पूजाभ्युदयिकानन्तरं कार्यमसाधारणत्वात् महादाने ब्राह्मणवाचनवत् आनन्तर्यश्रुतेश्च अतएव सवनीयपशूपाकरणात्प्राक् प्राकृतमग्नीषोमीय पशूपाकरणमपास्य विकृतावाश्विनग्रहग्रहणमुक्तं तदनन्तरन्तु ब्रह्मवरणादितः प्रकृतमेवकर्म ॥ अयं क्रमः स्ववृषोत्सर्गेऽप्यविकल एव, विशेषानभिधानात् ॥ यत्त्वपूपदाने वृषमुत्स्रक्ष्यमाणोऽहं दद इति प्रयोग इति तन्मन्दं नह्यङ्गं प्रधानं चिकीर्षमाणोऽह मितिप्रयोगः । नचाग्नावैष्णववादिदं प्रधानं, काम्यतापत्तेः तस्मादङ्गमेव, स्ववाप्येवं । एकादशाह श्राद्धस्य तु आद्य (श्राद्ध) पदेन निर्देशः । आद्यं षाण्मासिकं तथेतिदर्शनात् आद्यमेकादशे ऽहनीत्य नेनैकादशाह श्राद्धस्याद्यश्राद्धत्वप्रसिद्धेः ॥ नचैत

द्धदेकादशाहश्राद्धपदेपि स्वयं प्रयुज्यमाने लक्ष- णास्तु अत्रापि विवक्षितविवेकेन एकादशाहपदे लक्षणेतितद्वाक्यार्थः। सा च न लौकिकवाक्ये सम्भ- वति तस्य स्वायत्तत्वादिति ॥ पितश्चैत्रशर्मप्रेते तिरूपएवात्रप्रयोगः ॥ अत्रतु महाव्याहृतिमन्त्रेण छन्दोगत्रयकर्तृकं ताम्रपात्रस्थतिलोदकाहरणम्, उपाहरन्निमन्त्रेण सामवेदाद्विजातय इतिवचनात्॥ मन्त्रस्य च सामान्यतः प्राप्तौ विशेषानभिधाने महाव्याहृतिमन्त्रोग्राह्यः मन्त्रस्य देवतायाश्च प्रजा पतिरितिस्थिति रितिवचनात्। तेनोदकेन स्वकीय वस्तु प्रोक्षणं तेनैव मन्त्रेण, मन्त्रेणाभ्युक्षयेदिति वचनात्॥ ततस्तद्दिनएव श्राद्धकर्त्रा मधुपर्कसहित पञ्चगव्यप्राशनं कर्त्तव्यम्। यदितु द्वादशाहे सपिण्डनं तदा तन्न कर्त्तव्यं मधुनआमिषत्वात् श्राद्धपूर्वदिने चामिषभक्षणनिषेधात्॥ मासिकानि तु द्वादशदि- नादारभ्य द्वादशाभिर्दिनैः करणीयानीत्येकः कल्पः मासवृद्धावपि नात्रदिनवृद्धिः मासिकार्थवदद्वाद- शाहं कृत्वेति नित्यवद् द्वादशाहश्रवणात् किन्तु तन्मासस्थानपतितदिवसे मासिकद्वयं कर- णीयं नतु दिवसस्यापिवृद्धिरुक्तहेतोः। षष्ठद्वादश दिनयोस्तूनषाण्मासिकद्वयं। प्रतिमासन्तु मासिक

करणे मलमासस्य मासिकं त्रिंशत्तिथिघटितमास क्रमेण यदा पतति तदैव कर्त्तव्यं ऊनषण्मासिकन्तु सर्वत्र षष्ठमासिकात् प्रागेव । द्वादशाहादिसपिण्डने त्वलब्धस्थानं तत्सर्वमासिकशेषे आगन्तुकत्वात् । वर्षसपिण्डनपक्षे एकाहोने षण्मासे ऊनषाण्मासिकं त्र्यहोने वा, एवमेकाहोनेवर्षे ऊनवार्षिकं त्र्यहोने वा एकाहोनता च षष्ठमासिककरणपूर्वदिनपूर्वदिन-स्य नतु षष्ठमासिकाचरणपूर्वदिनस्यैव तस्य षष्ठमा-सपूर्त्तिदिनत्वात् । मासिकस्य द्वितीयमासप्रथम तिथौ वार्षिकस्य द्वितीयवर्षाद्यतिथौ कर्त्तव्यत्वात् ॥ नहि तृतीयामपि मरणतिथिसजातीयान्तिथिमन्त भाव्य मासोऽयंभवति किन्तु तत्पूर्वा अन्यथा एक त्रिंशतातिथिभिर्मासः स्यात् अत एकादशतिथ्यधि-केन मासद्वादशकेनवर्षस्यादिति । प्रत्यृतु वा मासि-कद्वयं, अत्र षष्ठमासिककरणदिने ततः प्राक् पञ्च-ममासिकं अपर्यासावृतुं प्रतीतिवचनात् अत्रोनष-ण्मासिकमेकाहोनेषण्मासे यदि क्रियेत तदा पञ्च ममासिकात्प्रागेव भवेदिति क्रमभङ्गःस्यात् यदितु तदाद्युत्कर्षेण पञ्चमषष्ठमासिकयोर्मध्ये तद्दिनएव क्रियेत तदा एकाहेनात्वित्यादि वाक्यविरोधः स्या-दिति । अत्राहुः प्रतिमासमासिककल्पविषयत्वेन

एकाहेन त्वित्यादिवाक्यस्य लब्धवृत्तितया अत्रतु तदाद्युत्कर्षन्यायेन ऊनषाण्मासिकस्य पञ्चमषष्ठ मध्यकर्त्तव्यत्वे एकाहेन त्वित्यादिवाक्यस्य सङ्कोच मात्रं अन्यथा तु पञ्चमोनषाण्मासिकयोः क्रमस्य भङ्गएव स्यादिति। मासिके तु तदन्तापकर्षस्यैव दृष्ट त्वादत्रापिकल्पे ऊनषाण्मासिकस्य वचनादेकाहोन-षण्मासकृत्यत्वे सिद्धे पञ्चममासिकस्यापि ततः प्राक्ताद्दिनएव कर्त्तव्यत्वं तदन्तापकर्षन्यायादिति केचित् तन्न दृष्टत्वं हि न नियामकं किन्तु न्यायः तथाचैकानेहेनेति प्रतिमासमासिकपक्षे क्रममबाधि-त्वा प्रत्युत मासिकपक्षे क्रमं बाधित्वेति वैषम्यं स्या दिति वैषम्यान्नसपन्थाः ॥ छत्रोपानहदानं श्राद्धा-द्भिन्नमपि भिन्नफलकमपि क्षतान्तश्राद्धे प्याचरन्ति प्रयोगविधिबलात्। तदयुक्तमित्युक्तं प्राक् ॥ तेभ्य श्चार्घन्निवेद्यैव पश्चाच्चस्वयमाचमेदिति सपिण्डनप्र-क्रमस्थब्रह्मपुराण वाक्यात् सपिण्डने अर्घदानान-न्तरमाचमनं ॥ लघुहारीतः ॥ इन्द्राग्नी यत्र हूयेते मासादिः सम्प्रकीर्त्तितः। अग्नीषोमौ स्मृतौ मध्ये सं-मामौ पितृसोमकौ ॥ इन्द्राग्नी इति इन्द्राग्निहवनं शुक्लप्रतिपादि साच मासस्यादिः अतएव पञ्चशार-दीये नक्षत्रेण युक्तः कालः, सास्मिन् पौर्णमासीति

सूत्रद्वयात् मघादियोगयोग्यपौर्णमासीशालिनि शुक्लप्रतिपदाद्यमावास्यान्ते चान्द्रे मासि माघादिपदस्य मुख्यत्वमुक्तं तेन शुक्लादिरेवचान्द्रः सर्वत्रा दर्त्तव्यो विशेषवचनेन परमस्यापवाद इति समय प्रदीपः । तथाच साम्वत्सरिकश्राद्धादावयमेवोल्ले-ख्यो।विपरीतवचनाभावादत्रैवार्थे सएव ॥ चक्रव-त्परिवर्त्तेत सूर्यः कालवशाद्यतः । अतः साम्वत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ॥ अयमर्थः ॥ आब्दि-कं श्राद्धं पौषादिमासीयमृताहव्यवस्थापितकर्त्तव्य-ताकं विहितं सूर्यसंक्रान्तेश्च मृताहव्यभिचारात्तस्य मृताहकर्त्तव्यता व्यवस्थिता न स्यादिति तत्र चान्द्र एव मासः ॥ अथ मासचिह्नमपि सूर्यस्य राशिविशे षावस्थानमेव मीनादिव्यवस्थितः सूर्यो यस्मिन् काले तस्यैव चैत्रत्वादित्याशङ्क्याह ॥ मासचि-ह्नन्तु कर्त्तव्यं पौषमाघाद्यमेवहि । यतस्तत्राविधानेन मासः सपरिकीर्त्तितः ॥ चित्रायोगयोग्या पौर्णमा-सी यस्मिन्मासे तत्रैव चैत्रपदस्यानुशासनात् सा-ऽस्मिन् पौर्णमासीति संज्ञयातिति पाणिनीयसूत्रात् एवमन्येपि मासाद्रष्टव्याः मीनादिस्थित सूर्ययोगा त्तु चैत्रादिपदप्रवृत्तावनुशासनाभावात् । केचित्तु इन्द्राग्निहवनस्य मासाद्यकृत्यस्य शुक्लप्रतिपदि

विधानेन शुक्लादिरेवात्रमासइत्याहुः । अत्रच फ-
लतो न विशेषः । पितृसोमकावित्यनन्तरं ॥ तम-
तिक्रम्य तु यदा रविर्गच्छेत्कदाचन । आद्योमलि-
म्लुचोज्ञेयो द्वितीयः प्रकृतः स्मृतः ॥ तस्मिँस्तुप्रकृ
ते मासिकुर्याच्छ्राद्धं यथाविधि । तथैवाभ्युदयं का-
म्यं नित्यं नैमित्तिकन्तथा ॥ प्रत्यब्दं द्वादशे मासि-
कार्यापिण्डक्रिया(बुधैः)द्विजैः। क्वपित्रयोदशेपिस्या-
द्यंमुक्त्वातु वत्सरं ॥ द्वादशे त्रयोदशे पूर्णइतिशेषः ।
अत्र द्वादश इति विधिः त्रयोदशइत्यपवादः आद्यमि-
तिप्रतिप्रसवः इदमपि यदि प्रथमाब्दे द्वादशोमासो-
मलमासस्तदा प्रथमसाव्वँत्सरिकं तत्रैव बोद्धव्यम् ॥
असंक्रान्तेपि कर्त्तव्य माब्दिकं प्रथमं द्विजैः । तथै-
वमासिकं पूर्वं सपिण्डीकरणन्तथेत्येतद्वचनात् ॥
असंक्रान्तेपीति मलमासे तथाच मासिकं सपिण्डी-
करणमाद्यवार्षिकव्वाँ मलमासेपि कार्यमित्यर्थः । नच
सपिण्डीकरणादूर्ध्वमित्यादिना मलमासे सकलसा
व्वँत्सरिकनिषेधकेन सह विरोधः असंक्रान्तेपीत्य-
स्य प्रथमसाव्वँत्सरिकपरतया तेनैव सपिण्डीकर-
णादूर्द्धमित्यस्य सामान्यपरस्य सङ्कोचनात् सा-
मान्यविशेषन्यायादिति ॥ समयप्रदीपोप्येवम् ॥
तथा च द्वादशोमासो यदि मलमा सस्तदा तत्रैव द्वा-

द्दशं मासिकं सपिण्डीकरणञ्च ॥ यदि त्वपकृष्य सपिण्डीकरणं कृतं तदा तत्रैव प्रथमाब्दिकं कार्य्यमिति ॥ श्राद्धपञ्जिकाप्येवम् ॥ विष्णुः । सम्वत्सराभ्यन्तरे यद्यधिमासपातोभवेत्तदामासिकार्थं दिनमेकं वर्द्धयेत् ॥ अत्र सम्वत्सरशब्द एकादशमासपरः ऋष्यशृङ्गवचनैकवाक्यताबलात् तेन मरणादिनावध्येकादशमासाभ्यन्तरे यद्यधिमासस्तदात्रयोदशमासिकानि भवन्ति । तेन शेषमासिकं सपिण्डीकरणं प्रथमाब्दिकं वा त्रयोदशे मासे संपूर्णे सति क्षयाहे कार्य्यम् ॥ ऋष्यशृङ्गः ॥ सम्वत्सरातिरेकोवै मासश्चैव त्रयोदशः । तस्मात्त्रयोदशं श्राद्धं न कुर्य्यान्नोपतिष्ठते ॥ एतदपिवचनं प्रथमवर्षे मरणदिवसादारभ्य द्वादशोमासो यदिमलमासस्तदा ॥ प्रतिहस्तकादयोप्येवम् । नन्वाश्विनशुक्लप्रतिपदि मृतस्याग्रिमभाद्रस्याधिकत्वे भाद्रामावास्यायामेवैकादशमासाः पूर्य्यन्ते शुक्लादिस्तुभाद्रः सकलएव मासो द्वादशोमलमासो भवति तस्याञ्च शुक्लप्रतिपदि मलमासभाद्रशुक्लपक्षीयायां यदि शेषमासिकं सपिण्डनञ्चाँकार्य्यं तदा प्रथमवार्षिकमपि तत्रैव कार्य्यं तत्र चोल्लेखासङ्गतिः नहि स आश्विनशुक्लपक्षो भवतीति । अत्राहुः, एकादशमासाभ्यन्तर इत्यस्य व्याख्यान-

स्य एकादशमासिकदिनाभ्यन्तर इत्यर्थः । तेन यद्येकादशमासिकपर्यन्तंकुत्रापि मलमासः प्रपत- ति तदा त्रयोदशमासिकानि अत्र तु तथैव तेना- त्र त्रयोदशमासपूर्त्तौ आश्विनशुक्लप्रतिपद्येव शे- षमासिकसपिण्डीकरणे प्रथमाब्दिकव्याँ भवन्ती- ति । नन्वाश्विनामावास्यामृतस्य प्रथमभाद्रामा- वास्यायामेकादशं मासिकं । तथा चैकादशमासि- कपर्यन्ते मलमासो न प्रविष्टः किन्तु तच्छुक्लप्र तिपदादिद्वितीयभाद्रामावास्यान्तश्चान्द्रो द्वादशो मासो मलमासोभूतस्तथाच तत्रान्त्यमासिकसपि- ण्डनेइव सांवत्सरिकमपि तत्रैव, असंक्रान्तेऽपि कर्त्त- व्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं पूर्वं सपि ण्डीकरणं तथा ॥ इति वचनात्तथाच तत्रोल्लेखासङ्ग- तिः नहि सा कयापि रीत्या आश्विनामावास्या भव- तीति । उच्यते आश्विनामावास्या हि शुक्लादिभाद्रा- मावास्यैव द्वितीयभाद्रामावास्यापि तथेति क्वोल्ले- खासङ्गति गन्धोपि । ननु विष्णुवचसा श्राद्धसप्तदश केन सिद्धेन नित्यस्य तत्षोडशत्वस्य बाधोदोषाय स्यात् नस्यान्नैमित्तिकेन नित्यबाधस्यादोषत्वात् अ- तएव च फलचमसे न सोमबाधः शास्त्रार्थः ॥ यत्त्वे- तद्भयाद्वर्द्धयेत् छेदयेदितिव्याख्यानं तन्मन्दं ए-

कादशमासाभ्यन्तरे अधिमासपाते मासस्य छेदने कृते प्रथमाब्दिके मासचिन्हितत्वस्य बाधापत्तेः नहि वैशाख्यां मृतस्य चैत्रीपर्यन्ते क्वाप्यधिमासपाते चैत्र्यामाब्दिके वैशाखचिह्ननं कथमपि भवति । समयप्रदीपादयोप्येवम् । यत्तु कृष्णादिक्रमेणैव वार्षिकमिति ध्रुवं तेन तत्पर्यन्तं यावन्ति मासिकस्थानानि लभ्यन्ते तावन्त्येव मासिकानि भवन्तीति तत्तुच्छं । एवं मलिम्लुचे शुक्लपक्षे मृतस्य त्रयोदशकृष्णपक्षे मृतस्य द्वादशैव मासिकानिस्युस्तथाच समयप्रदीपरत्नाकरचिन्ताणिप्रदीपादिविरोधः स्यात् । नचेष्टापत्तिः, शुक्लादौ तन्मासे मृतस्य कृष्णादौ तस्मिन्नाब्दिककरणे अब्दापूर्त्तावेवाब्दिकं तन्मासपूर्णिमोत्तरकृष्णतत्तिथ्याहि तदब्दपूर्त्तिः स्यादिति महत्पाण्डित्यं ॥ किञ्च मलमासे शुक्लपक्षे पत्यौ कृष्णपक्षे भार्यायां मृतायामब्दान्तेद्वयोर्विसर्जने प्राप्ते भार्याया आदौ विसर्जनं स्यात् तच्च नपत्युरविसार्जितत्वात् । अथाधिमासपात इत्यत्र असंक्रान्ते पीत्यत्र च मासउक्तः । मासश्च पक्षौ, मासस्तुताकुभाविति कोषात् तथाचाद्याधिमासेऽन्त्याधिमासे च मरणे श्राद्धे च शुक्लपक्षान्वय आवश्यकः पक्षमात्रेण मासासिद्धेः तदन्वयश्च शुक्लैकति-

लिखितं किन्तु विश्वेदेवाइदमासनं वोनम इत्याद्येव लिखितं विश्वेदेवासइत्युक्त्वा विश्वदेवाँस्तु संयजे- दितिवाक्याच्च ॥ नच पार्वणे एकोदिष्टमत्र निमित्तं विश्वदेवश्राद्धं त्वङ्गमिति तथैव निर्देशउचितइति वाच्यं मानाभावात् भवतु वा निमित्तनैमित्तिकभावः श्राद्धयोस्तथापि येनरूपेण देवतात्वं तदेव निर्देश्यं नतुश्राद्धयोः सम्बन्धसाहितं गौरवादप्रयोजकत्वा- द्देशनाविरहाच्च । अत एव पितरिदन्तेर्घ्यं पितामहे दन्तेर्घ्यं प्रपितामहेदन्तेर्घ्यमिति तथा पितरत्रा- वनेनिक्ष्व पितामहात्रावनेनिक्ष्व प्रपितामहात्रावने निक्ष्वेतिसौत्रः प्रयोगोघटते अन्यथामुकश्राद्धइत्य- पि प्रयोगः सूत्रे क्रियेत तस्मात्सपिण्डीकरणेपिविश्वे- देवा इदमासनं वोनमः अमुकप्रेत इदमासनं ते नमः अमुकशर्मन्निदमासनं ते स्वधा इत्येव प्रयोगः ॥ श्रीदत्तोपाध्यायवर्द्धमानोपाध्यायादयोप्येवम् ॥ अर्घ- पिण्डविभागयोरप्यत्र मन्त्रान्वयः, येसमाना इति द्वाभ्यामाद्यन्तुविभजेत् त्रिधेतिवचनात् । श्राद्ध कल्पेतु तदलिखनं कल्पतरुकारानुक्तत्वमात्रेण हरिहर पद्धतौ वृषोत्सर्गवत् । सर्वस्मिन्नेव श्राद्धे कृत्रिमपुत्रो मत्पुत्रत्वकरोतिप्रयुङ्क्ते अयन्तु प्रयोगो ऽनार्षो न वा निबद्धः किन्त्वाधुनिकमैथिलोत्प्रेक्षित

एव समेवतार्थतया तु शिष्टैरपि परिगृह्यते, तच्च न मनोरमं पितुरपि जनक(पदेन)त्वेन देवतात्वापत्तेः। जनकपदं न देशितमितिचेत् मत्पुत्रत्वकरेति पदमपि तथैव ॥ किञ्च पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रियेत्यादिना द्वादशान्यतमपुत्राधिकारिके श्राद्धे पितृपदेन रत्नाकरादौ देवतात्वप्रतिपादनाच्च ॥ अग्निहोत्रिणा तु पितुः साव्वँत्सरिकं त्रिपिण्डकं सविश्वदेवकं प्रणीताग्नौ पक्त्वा तत्रैव हुत्वा कार्यमेवमष्टकान्वष्टके अपि ॥ दर्शश्राद्धन्तु दाक्षिणाग्नौ पक्त्वा हुत्वा कार्यं उभयत्र प्रणीताभस्मनैव मण्डलं, श्राद्धदेशस्तु दक्षिणाग्नेरुदग्देशः ॥ छन्दोगपरिशिष्टम् ॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्माणि। पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥ अँभिविधावाङ् तेन पिता आउद्वाहनात् विवाहपर्यन्तं सुतसंस्कारजनके कर्मणि जातकर्मनामकरणचूडाकरणोपनयनविवाहरूपे स्वपितृभ्यः पिण्डान्दद्यादाभ्युदयिकश्राद्धं कुर्यादित्यर्थः। संस्कारग्रहणात् पुत्रस्य द्वितीयविवाहे पित्रा नाभ्युदयिकं कार्यं प्रथमविवाहेनैवपुत्रस्य संस्कारसिद्धौ द्वितीयविवाहस्य संस्काराजनकत्वादिति। तेषांपितामहादीनां, तस्यपितुः, तेनायमर्थः संस्करणीय पितुरभावे त-

त्क्रमात् तेषांकृतेपिण्डान्दद्यात्। अत्र तत्क्रमात् तद्रीतेः पितृरीतेः, तेन यथा संस्करणीयपिता दद्या त्तथान्योपि दद्यादिति केचित् तन्न व्यवछेदार्थक तु शब्दविरोधात् किञ्च श्राद्धार्हः संस्करणीयस्य पिता कथं त्यज्यताम् ॥ एतद्वचनबलादिति चेन्न अस्य विचार्यत्वात्। अपुत्रस्य स्वकीयकन्याविवाहे आभ्युदयिकं कार्यमिति श्राद्धकल्पलिखनं पितृहीनस्य योनामादिकर्त्ता स संस्कार्यपितरमारभ्याभ्युदयिकं कुर्यादिति गौरिकृतश्राद्धचिन्तामणिलिखनं तथा श्राद्धपारिजातपल्लवपितृभक्तिस्मृतिसारप्रदीपादिलिखनानि च व्याकुप्येरन्निति ॥ यत्रतु पिता क्षतौ तिष्ठति आश्रमान्तरितो वा जीवति पातित्यादिना श्राद्धानर्हो वा तत्र पितामहादित एवाभ्युदयिकं पितृश्राद्धप्रापकाभावात् पितर्येकदण्डग्रहणेन पातित्येन गोब्राह्मणहतत्वेनासपिण्डितत्वेन वा श्राद्धानर्हे ब्राह्मणादिहतइत्यादिना पितामहोपक्रमकश्राद्धप्रतिपादनाच्च ॥ ननु पैतृक्रमस्त्वेवम्, मातृकन्तु संस्करणीयपितुरेव तथा तेषामित्यनेन स्वापितृभ्यइति पितृपदस्मारिताः संस्करणीयपितामहादयः प्रत्यवमृष्यन्ते किन्तु संस्करणीयपितुरन्तर्भावबलेन संस्करणी

य (स्य) वृद्धप्रपितामहस्त्यज्यते तथाच तेषामित्यनेन पूर्वप्राप्तानां षण्णां मध्येऽवयुत्य पञ्चानूद्याप्राप्तः पिता तत्क्रमादितिपदेन विधीयते॥ नचैवं तद्वत्कुर्यादिति श्राद्धपल्लवविरोधइति वाच्यं तद्वदिति न वत्यन्तं येन पितृहीन इवेत्यर्थे सति विरोधः स्यात् किन्तु मतुबन्तमिदं तेन तद्वत् पितृमच्छ्राद्धं कुर्यादित्यर्थोऽतोनेदं कर्तृविशेषणं किन्तु कर्मविशेषणमिति मैवं, पितृहीनस्य योनामादिकर्त्तासतद्वत्कुर्यादित्यत्र तच्छब्देनप्रधानतयापितृहीनस्यैव प्रत्यवमर्षे वतेरेव युक्तत्वात् ॥ हन्तैवमपिपूर्वपक्षस्ययुक्तत्वे अस्तुपल्लवफक्किकैवायुक्ता ॥ किन्नश्छिन्नमितिचेत् किन्नः छिन्नं यतोवाक्यमेव नाकलि (तं) तथाहि तस्य संस्करणीयस्य पितुरभावे तेषां स्वपितुः पितॄणां कृते दाने प्राप्ते संस्कार्यपितृक्रमस्यार्थतएव लाभे तत्क्रमादित्यस्य वैयर्थ्यापत्त्या तत्पदेन प्रस्तुतस्य सुतस्य प्रत्यवमर्षे तत्क्रमादित्यनेन संस्कार्यक्रमादिति लभ्यते तेन संस्करणीयोयथा करोति तथा पितुरभावे पित्रन्यः संस्कर्त्ता कुर्यादित्यर्थः॥ एतेन तत्क्रमात् तदुपक्रमादितिव्याख्यानमपास्तमपदार्थत्वात् । तत्क्रमात् तेन पित्रा सह यः क्रमइत्यप्यपास्त मनुशासनविरोधात् ॥ नापि तमादाय क्रमस्तत्क्रमः

कल्पनागौरवात् उभयत्रानुवादत्वापत्तेः ॥ अष्टौ संस्कारकर्मणि गर्भाधानमिव स्वयं। पिता कुर्यात्तदन्यो वा तस्याभावे तु तत्क्रमात् ॥ अस्यार्थः संस्करणीय पितुरभावे यथा (संस्करणीयः) सकरोति तथान्योपि करोति नहि कर्तृभेदाद्देवताभेदइतिभावः । तेन नानिष्ट्वातुपितॄन् श्राद्धे कर्म वैदिकमाचरेदित्यादिशब्दस्वरसेन यद्यपि संस्कर्त्तुरेव प्रतीयन्ते तथापि तत्क्रमादित्येकवाक्यतया श्राद्धे संकरणीयसम्बन्धिन एव लभ्यन्ते ॥ यत्तु पितरि जीवत्यन्येनोपनयने क्रियमाणे वचनाभावादुपनेता श्राद्धं न करोति किन्त्वसंस्कर्त्ता पितैव तद्बीजभूतस्य सुतसंस्कारस्य सत्त्वादितिमतं तन्न अष्टावित्यादिवाक्ये वाकारेणानास्थावाचिना पितृसत्वेऽन्यस्याधिकारे सिद्धे तत्क्रमादित्यनेन च संस्करणीयपितृवदन्येनापिश्राद्धं कार्यमिति सिद्धम् ॥ तस्याभावे तस्य संस्कर्तृत्वाभावे ॥ यत्तु तस्याभावे प्रायणे इतिकेचित् तन्न सकलनिबन्धविरोधात् ॥ ननु कात्यायनवचनस्याप्यष्टावित्यादिवाक्यवदेवार्थोस्तु मैवं, तत्र तस्याभावइत्यस्य संस्कर्तृत्वाभावार्थत्वे निर्बीजाध्याहारापत्तेः श्राद्धकल्पादिविरोधापत्तेः श्राद्धार्हस्यापिपितुः त्यागापत्तेः वृद्धौ सपिण्डनस्यवैयर्थ्यापत्तेश्च । पितु

राभ्युदयिकान्तर्भावाय हि तत्तदा क्रियते तदन्तर्भाव-
स्त्वन्मते तत्र नास्त्येवेति तस्मात् पितुरभावे पुत्रस्य
कन्यायावा संस्कारे कात्यायनवचनोक्ता व्यवस्था
पितुस्तु सत्वएवान्येन संस्कारकरणेऽष्टावित्यादिव-
चनाद्व्यवस्थेति ॥ पितुरभावे स्वविवाहस्याप्याभ्यु-
दयिकनिमित्तत्वं, नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः
कार्यमृद्धये । ततोविवाहः कर्त्तव्यः शुद्धः शुभसुत-
प्रदः इति ब्रह्मपुराणवचनात् ॥ ❀ ॥ ❀ ॥
अथ श्राद्धनिर्णयः ॥ तत्र श्राद्धं दानमित्येके पितृ-
भ्योदद्यादितिबहुशः श्रुतेरिति तन्न नह्यसंप्रदान-
कं दानं संभवति ॥ नच ब्राह्मणस्यात्र संप्रदानता ब्रा-
ह्मणस्त्वाहवनीयार्थे इत्यापस्तम्बसूत्रेण तेषामाहव-
नीयवत् प्रतिपत्तिभागित्वप्रतीतेः उद्देश्यताविरहा-
च्च । एवञ्च ददातिरत्र गौणः किन्तु यागान्तर्गतं
तत्र पितरोदेवता इति तत्सूत्रैकदेशेन तस्य पितृ-
देवताकत्वप्रमितेः । देवतात्वन्तु तत्र पितृणां देश-
नादेशितचतुर्थ्यन्तपदनिर्देश्यत्वमेव ॥ नच देव-
ताया अचैतन्यनियमात् कथं पित्रादिर्देवतास्त्विति
बाच्यं देवतात्वे चैतन्यमनङ्गं नतु देवतायाश्चैतन्यं
नास्त्येवेति नियम इति मदुपगमात् ॥ यत्तु श्राद्धं
यागदानोभयरूपमिति श्राद्धविवेकमतं तन्न पित्रा-

ङ्गिना हि संप्रदानेन तद्दानं स्यात्, श्राद्धिना वा, ना द्यः। तेषां देवतात्वस्यापस्तम्बादौ निर्णययात् ॥ न च तथापि तेषां संप्रदानतैव, देवताचतुर्थीविरोधात् स्वाभ्युपेतस्य यागदानोभयरूपत्वस्य भङ्गापत्तेः॥ नच पितृभ्योदद्यात् पितॄन्यजेतेति ददाति यजत्योः श्रवणात् श्राद्धस्योभयरूपतेति वाच्यं दानयागयोर्विरोधेन तत्रैकप्रयोगस्यावश्यं गौणत्वात् ॥ नच सर्वेषां वस्तु नियतत्वात् विकल्पोपि वस्तु नियतएव तथाच यथा सिद्धन्तो ऽर्थाभ्युपगमोऽभ्युपगम्यमाऽर्थश्चेति न्यायमते द्विरूपः तद्वत् श्राद्धमपि यागदानोभयात्मकं द्विरूपमस्त्वितिवाच्यं नहि सिद्धान्तोप्येवं किन्तु तत्रापि नागृहीतविशेषणान्यायादभ्युपगमएवसः ॥ नचैवमधिकरणसिद्धान्तादिसूत्रविरोधः, अर्थप्राधान्यविवक्षया तथा सूत्रणात्, अतएव लिङ्गपरामर्षस्य करणतामभ्युपेत्यापि लिङ्गस्य करणत्वाक्षेपोरोधोपघातसादृश्येभ्योव्यभिचारादित्यादिसूत्रे सङ्गच्छत इतिदिक् ॥ तच्च श्राद्धं त्रिदैवत मेकदैवतञ्च तत्रान्त्यस्यारम्भे रौहिणोत्तरसमयोनिषिद्धः श्राद्धपल्लवश्राद्धपञ्जीप्रभृतयोप्येवम् ॥ त्रिदैवतमपिद्वेधा पार्वणमपार्वणञ्च। तत्र पार्वण ममावास्यादिनियतं, अपार्वणन्तु क्षयाहे साग्न्यौ-

रसकर्तृकं पितृश्राद्धं, तत्र पार्वणे मातामहानामप्य-
न्वयः । पितरोयत्र पूज्यन्ते तत्र मातामहाध्रुवमिति
वचनात् । क्षयाहत्रिपिण्डकेतु न तेषामन्वयः । त-
थाहि । औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
(प्रत्यब्दमितरेकुर्युरेकोद्दिष्टं सुतादशेति)। तथा,पा-
र्वणेन विधानेन देयमग्निमता सदेत्याभ्यां तदा पा-
र्वणकरणे प्राप्ते तत्स्वरूपजिज्ञासायां । सपिण्डीकर-
णादूर्द्ध्वं यत्र यत्र प्रदीयते । तत्र तत्र त्रयं कुर्यादित्य
नेन पार्वणस्य त्रिपिण्डकत्वं सिद्धं तच्च वर्जयित्वा
मृताहनीत्यनेन निरग्निकर्तृके क्षयाहश्राद्धे निषि-
द्ध्यते । साग्निकर्तृकेतु तस्मिन् लिखितविशेषवच-
नद्वयबलान्न निषिद्ध्यत इति तस्य त्रिपिण्डकत्व-
मायाति । पार्वणे तु तत्र मातामहाध्रुवमित्यादिनो
त्सर्गवचनेन बाधकास्पृष्टे न षट्पिण्डकत्वमेव तत्रा
पि पितॄणामेव श्राद्धस्यामिक्षावत्प्राधान्यं तस्यैवा-
मावास्यादिकालसम्बन्धेनोत्पन्नत्वात् तत्र तत्र
त्रयं कुर्यादिति स्मरणात् यएवं विद्वान पौर्णमा-
सीं यजते य एवं विद्वानमावास्यां यजत इत्यादि
श्रवणात् पौर्णमास्यमावास्याकालसम्बन्धोत्पन्नस्य
दर्शपौर्णमासयागस्य फलान्वयवत् । अतएव साग्नि
नौरसेन पितुः क्षयाहे पित्रादित्रिकस्य श्राद्धे कृते

तत्र मातामहानां श्राद्धाय न पार्वणारम्भः वाजिनव त्तस्यानुष्ठानाप्रयोजकत्वादिति ॥ एतच्च पार्वणं श्राद्धान्तराणां प्रकृतिभूतं एतद्धर्मस्य कस्यचित्तेष्वति देशात् कस्य चिच्चनिषेधात् पिण्डदाने पिण्डपितृ यज्ञवत् तेन विकृतौ विशेषानभिधाने प्राकृताः सर्वे एवधर्मा अन्वीयन्ते प्रकृतिवद्विकृतिरिति न्यायमूलकपरिभाषास्वरसात् । पिण्डदाने त्वेतत्परिभाषाबलेन पिण्डपितृयज्ञवद्रेखायामेवावनेजनं नायाति विकृतौ दर्भेष्वेव तद्विधानात् । वैकृतविशेषोपदेशबलेन प्राकृतधर्मबाधात् शरमयं बर्हिर्भवतीतिवत् ॥ श्राद्धादौ चास्मत्पदमन्तरेणैव सम्बन्धि शब्दतया स्वपित्रादिधीः, अतएव शुन्धन्तां पितरः शुन्धन्तां पितामहा इत्यादि श्रुतौ पितरिदन्तेर्घ्यं पितामहेदंतेर्घ्यं प्रपितामहेदंतेर्घ्यमित्यादि स्मृतौ च शब्दादेव स्वपित्रादिधी रुदेतीत्युपगमः । तस्यैव प्राकरणिकत्वेन पदिन्यायादन्वयसम्भवादिति पारिजातादयः तन्न नहि शाब्दाशाब्दयोरन्वयः सम्भवति सम्भूयोच्चरितानां सम्भूयान्वयानुभावकत्व व्युत्पत्तेः । कथं तर्हि लक्षणास्थलेनीरस्मारिततीरस्य, कथञ्चद्वारमित्यत्राध्याहृतपिधानस्यान्वयधीः न कथञ्चित् ॥ हन्तैवं पदपांशुना यूपमनक्तीत्यत्र

सोमक्रयार्थानीयमानैकहायन्या प्रकरणोपस्थितया प्यशाब्द्या पदपदार्थस्यान्वयधीरिति भज्येत बाढं मानसस्तत्रान्वयबोधः पितरः शुद्धन्तामित्यत्र तु लक्षणा अतएव शब्दाध्याहारोपि सङ्गच्छते । कल्पतरुकारादयोप्येवम् ॥ पार्वणे कात्यायनः । अपरपक्षे श्राद्धं कुर्वीतोर्द्ध्वं वा चतुर्थ्यायदहः सम्पद्यते तदह र्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा, स्नातकानेके यतीन् गृहस्थान् साधून् वा श्रोत्रियान् वृद्धाननवद्यान् स्व कर्मस्थानभावेऽपि शिष्यान्स्वाचारान् द्विर्नग्न शुक्लविक्लिधश्यावदन्तविद्धप्रजननव्याधितव्यङ्गि श्वित्रिकुष्ठिकुनाखिवर्जमनिन्द्येनामन्त्रितोनापक्रामे - दामन्त्रितोवाऽन्यदन्नं न प्रतिगृह्णीयात् स्नाताञ्छुचीनाचान्तान् प्राङ्मुखानुपवेश्य दैवे युग्मान्यथाशक्ति पित्र्य एकैकस्योदङ्मुखान् द्वौ वा दैवे त्रीन् पित्र्यएकैकमुभयत्र वा मातामहानाञ्चैवं तन्त्रं वा वैश्वदेविकं । श्रद्धान्वितः श्राद्धं कुर्वीत शाकेनापि नापरपक्षमतिक्रामेन्मासि मासि वोशनमिति श्रुतेः । तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान् वर्जयेदावाहनादि वाग्यतओपस्पर्शनादामन्त्रिताश्चैवं ॥ अत्र कर्कोपाध्यायाः ॥ अपरपक्षे कृष्णपक्षे श्राद्धं श्राद्ध

नामकं कर्म कुर्वीत तेन कृष्णपक्षाः सर्व एव श्राद्ध कालत्वेन विधीयन्ते अतएव मासिमासि वोशन मितिश्रुतेरप्युपादानं घटते ॥ ऊर्द्ध्वं वा चतुर्थ्या इति पञ्चम्यादिदिनेष्वेवश्राद्धं कुर्वीतेति द्वितीयः कल्पः ॥ यदहः सम्पद्यते तदहरितितृतीयः कल्पः ॥ तेनाश्विनेतरमासस्यापि कृष्णपक्षे समग्रमेवपक्षं पार्वणं पञ्चम्यादि वा पार्वणम् । एकस्मिन् वा दिने पार्वणं ॥ अत्रैव गोतमः । अथ श्राद्धममावस्यायां पितृभ्योदद्यात् पञ्चमीप्रभृति वाऽपरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसम्पत्तौ कालनियमः शक्तितः ॥ अपरपक्षस्य कृष्णपक्षस्य, पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तुतावुभौ इत्यनुशासनात् मासस्य तु शुक्लपक्षः प्रथमः, कृष्णपक्षो द्वितीयः पक्षः । यस्मिँश्च मासे शुक्ला प्रतिपन्मीनस्थादित्याव्यभिचारिणी सचैत्रः, एवं मासान्तरेपि ॥ सा च प्रतिपन्मासस्यादिभूता, इन्द्राग्नी यत्र हूयेते मासादिः सप्रकीर्तितः । अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसौमकाविति वचनात् । तदहः पूर्वेद्युर्वेति ब्राह्मणामन्त्रणे कालविकल्पः ॥ स्वाचारानित्यन्तं पात्रविशेषणमुपादानाय । कुनखिवर्जमित्यन्तं तत्त्यागाय । प्रतिगृह्णीयादित्यन्तं पात्रस्यैवं करणे प्रत्यवाय इत्येवं परम् ॥

स्नातान् शुचीनाचान्तानितिसर्वं श्राद्धविशेषणं, प्राङ्मुखानुपवेश्य दैवे युग्मानिति विश्वदेवब्राह्मण मात्रपरं। अयुग्मान् यथाशक्ति पित्र्य एकैकस्योदङ्मुखानिति पितृब्राह्मणपरं द्वौ वा दैवे त्रीन्पित्र्य इति॥ तेन सदैवे पितृपक्षे पञ्च ब्राह्मणाः॥ एकैक मुभयत्र वा, तेन सविश्वदेवे पितृपक्षे द्वौ ब्राह्मणौ॥ मातामहानाञ्चैवं॥ मातामहानामपि सविश्वदेवानां पञ्च द्वौ वा ब्राह्मणाः। तन्त्रं वेति॥ विश्वदेवद्वये एकोवा ब्राह्मणः॥ शाकेनापीत्यादिना सर्वापरपक्ष पार्वणानां नित्यता। अत्रैव हेतुः। मासि मासि वोशनमितिश्रुतेः। सर्वेषामेव कृष्णपक्षाणां नित्यत्वे मासिमासीति वीप्सासहितोपादानं तत्रैव घटते। आश्विनापरपक्षस्यतु नित्यत्वाय तदुपादानमधिकं स्यात्॥ तदहरित्यादि वर्जयेदित्यन्तं नियमकथनं। आवाहनादि श्राद्धाचमनपर्यन्तं प्रकृतेतरशब्दानुदीरणं। एतच्चनियमद्वयं यजमानस्येव श्राद्धिनोपि॥ यच्च गोतमकात्यायनादिना अपरपक्षे चतुर्थ्याऊर्द्धम्पक्षनिर्वाहकं सकृत्करणमप्युक्तं तत्पक्षचतुष्टयावरुद्धाश्विनापरपक्षेतरापरपक्षविषयं सामान्यविशेषन्यायात्॥ अश्वयुक्कृष्णपक्षे त्वित्य स्याश्वयुक्कृष्णपक्षत्वपुरस्कारेण प्रवृत्ततया तेना-

श्विनापरपक्षस्य पक्षचतुष्टयवत्वेन द्रागालिङ्गना·
त्। गोतमादिस्मृतीनान्तु अपरपक्षत्वसामान्यपुर
स्कारेण प्रवृत्तानामवरोधविरोधेनाश्विनापरपक्षं
विहाय कृष्णपक्षान्तरेषु प्रवृत्तेः ॥ श्राद्धकल्पादयोप्ये
वम् ॥ एवं चाष्टका त्रयोदशी वा केवलात्राप्यविरु·
द्धा आश्विनापरपक्षएव तद्विधानात्। ननु चाप·
रपक्षशब्दस्याश्विनापरपक्ष एव रूढिः। आषाढीम
वधिं कृत्वा यःस्यात्पक्षस्तु पञ्चमः। अपरपक्षः सवि
ज्ञेय इति जातूकर्ण्यवचनादितिचेद् भ्रान्तोसि, अ·
स्य हि शक्तिग्राहकत्वे अस्यैव चतुर्थः पादः कन्यां
गच्छतु वानवेत्येवं रूयोऽव्यर्थ आपद्येत नहि सवि·
तुः कन्यागतत्वे सति तत्रापरपक्षस्य शक्तिरिति के
नापि शङ्कितं यदुद्धाराय कन्यां गच्छतु वा नवेति त
त्रानास्थाश्रीयेत किन्त्वश्वयुक्कृष्णपक्षे तावत्पार्वणं
विहितं तच्छुक्लादिरीत्या मा प्रसांक्षीत् कृष्णपक्षस्य
सर्वमासेषु द्वितीयपक्षत्वनियमादिति तद्वारणाय
जातुकर्ण्येनोक्तम्। अश्वयुक्कृष्णपक्षे त्वित्यत्र कृ·
ष्णपक्षशब्दस्याषाढीतः पञ्चमः पक्षोऽर्थः तेन स·
एवाश्विनापरपक्षः पार्वणे ग्राह्यः तत्र च कन्यागतत्वं
न पुरस्क्रियते अपरपक्षः सविज्ञेयः आश्विनापरप
क्षः सविज्ञेयः सग्राह्य इति यावत्। कर्कोपाध्याया-

दारभ्य वर्द्धमानोपाध्यायपर्यन्तमेषैव व्याख्या ॥ श्राद्धचिन्तामणौ ( श्राद्धकल्पे ) जातूकर्ण्यवाक्ये तत्र श्राद्धं प्रकुर्वीतेति तृतीयः पादः, तथाच त्वदुक्तशङ्कापि नेति ॥ आश्विनापरपक्षस्तु कन्यार्कं विनैव श्राद्धनिमित्तं अतएवाषाढीमित्युपक्रम्य, तत्र श्राद्धं प्रकुर्वीत कन्याङ्गच्छतु वा नवेति श्राद्धकल्पोपि ॥ दिने दिनइत्यत्र दिनपदन्तिथिपरम् । तथाहि । काम्यस्थले श्राद्धविधिनिषेधयोस्तिथिष्वेव श्रवणात्ताएव तावत्काम्यश्राद्धकालाः तत्रचाहःपदं श्रूयते सर्वेष्वेवापरपक्षाहः स्वित्यभिधानात् तथा च नित्यस्थलीयमपि दिनपदन्तिथिपरमेव साच दिन पदस्य तिथिपरता शक्त्यैव, दिनाहः पदयोः पर्यायत्वात् ॥ अथैवं दिनपदमहः पदञ्च नानार्थं स्यात् बाढं गोपदादिवदेकानुपपत्तिमनपेक्ष्यैवापरबोधनात् । अस्तुवा एकतरत्र लक्षणेत्यलमप्रस्तुताचिन्तयेति ॥ अत्राहुः, दिनपदस्य नित्ये तिथिपरत्वं काम्यदृष्टान्तबलेन कल्प्यत इति तावन्न सम्भवति नहि दृष्टान्तबलेन तत्परत्वं शक्तिर्वा कल्प्यते किन्तु प्रतीतिरूपफलबलेन तात्पर्य मनन्यलभ्यतया तु शक्तिरिति ॥ ननु काम्यविधिवन्नित्यविधिरपि तिथ्यालम्बन एव, अन्यथा काम्येन प्रसङ्गान्नित्यसिद्धिर्न

स्यात् कालभेदेप्रसङ्गाभावादितिचेत् अस्त्वेवम्, अस्तुचानुष्ठानावृत्तिः ॥ ननु तिथिनैकेन दिवसश्चान्द्रमासे(न)प्रकीर्त्तितः। अहोरात्रेण चैकेन सावनोदिवसः स्मृतः इति वचनाद्दिवसपदस्य तिथिवाचकत्वमितिचेत् भ्रान्तोसि तिथिना दिवसउच्यत इति यदि वाक्यार्थस्तदा वैपरीत्यम् । अथ मासिकादौ सावनमासानुष्ठेये तिथिरेवदिवसस्तेनत्रिंशता तिथिभिस्तत्र मासइत्यर्थः तदा किंप्रकृते, नहि दिनपदस्य तिथिवाचकत्वं तिथितात्पर्यकत्वं वा ततः सिध्यतीति ॥ ननु कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयोयथैता न तथेतराः ॥ इति मनुवचनेन द्वादशापरपक्षसाधारणेन नित्यपार्वणाय तावत्तिथयस्तूयन्ते अतोविद्मः सर्व्वापरपक्षीय नित्यपार्वणानामपि तिथयएव काल इतिचेन्न अनेन गोतमोक्ते सकृत्करणेऽपरपक्षान्तरविषये दशम्यूर्द्ध्वंचतुर्द्दश्यन्या काचिदेकातिथिरुपादेयत्यभिधीयत इतिहि श्राद्धविवेकः, नत्वाश्विनापरपक्षोऽन्यो वा स्तूयते अन्यविषयत्वात् ॥ वस्तुतस्तु श्राद्धविवेकोक्तमप्यसत् गोतमोक्तस्यैकाहविषयत्वात् मनूक्तस्यदशम्यादिकालस्तावकत्वात् ॥ हन्तैवं, काम्येष्वेकादशापरपक्षपार्वणेषु तिथिरेव विहिता एवं नित्ये

ष्वप्यपरपक्षान्तरीयपार्वणेषु। तथाच नित्येष्वाश्विना परपक्षपार्वणेषु तिथीन्विहाय वासराविहिता इत्यत्र किं बीज मितिचेत् अश्वयुक्कृष्णपक्षे तु श्राद्धन्देयं दिने दिनइत्यत्रेहि। तथाप्यनेनैव विधिना वीप्सा बलात्सर्वस्मिन्नेवापरपक्षदिने श्राद्धं विधीयते॥ न च वर्जयित्वा चतुर्दशीमिति निषेधबलेनास्य सङ्कोचः वीप्साग्रस्तविधिना विशेषमुखप्रवृत्ततया नित्यविधित्वेन फलनिरपेक्षत्वेन लघुप्रवृत्तिकतया च प्रागेवा श्विनापरपक्षावच्छिन्नाः कृत्स्नाएव दिवसाआदावालिङ्गिता इति तदालिङ्गितां चतुर्दशीमपहाय चतुर्दशीनिषेधश्चतुर्दश्यन्तरमालिङ्गति सामान्यविशेषन्यायात्। यथा सकृत्करणविधेः सामान्यमुखप्रवृत्तस्य पक्षचतुष्टयावरुद्धाश्विनापरपक्षेतरापरपक्ष विषयत्वं सामान्यविशेषन्यायादेवेति तावत्प्रदीपमतन्तन्न अन्येषान्तु विगर्हितेत्यनेनाश्विनापरपक्ष विषयकेणाशस्त्रहतानां चतुर्दश्यां सकलपूजानिषेधात्॥ अथ प्रकृतमनुसरामः॥ एवञ्च प्रदीपकृतोपि दिने दिन इत्यादिनापि सर्वतिथिविधिंवदन्तो दिनपदस्य तिथिपरत्वमेवाहुः। एवमेवाश्विनापरपक्ष चतुर्दशीवर्जं सर्वतिथयइति नित्यपार्वणप्रकरणे सिद्धवत्लिखन्तिस्म प्रतिहस्तका अपीति। एवञ्चै-

कस्मिन्नपराह्णे तिथिद्वयलाभे पार्वणद्वयं उत्तरदिनापराह्णे तु पुनः तत्तिथेर्लाभेपि न तत्पार्वण सकृत्करणेनैव शास्त्रार्थसिद्धेरिति तिथिविधिपक्षे निर्गलितमिति ॥ अत्रब्रूमः । एवमपि दिनपदात्तिथ्युपस्थितिर्लक्षणयैव इति गलेपादिकयापि वक्ष्यसि ॥ अथ दिनपदस्य तिथावौपसन्दानिकी शक्तिरेव, उपसन्दानमश्वयुक्कृष्णपक्षइति वाक्यं, यथा प्रकृष्टजये जेः शक्तौ प्रशब्द इति चेत् । भ्रान्तोसि अश्वयुक् कृष्णपक्षे नद्यां दिने दिने पितॄँस्तर्पयेदित्यत्रापि दिनपदस्य तिथावौपसन्दानिकशक्त्यापत्तेः । किञ्चजिधातोर्जयसामान्यशक्तस्य प्रोपसर्गे सति प्रकृष्टजयप्रतिपत्तौ प्रोत्तरजित्वेन तत्र विशेषशक्तिः कल्प्यते, अत्रतु न तथा दिनतिथ्योः सामान्यविशेषभावाभावादिति । ननु विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनां । चतुर्दश्यां भवेत्पूजा अन्येषान्तु विगर्हितेति मरीचिवचनादस्तु चतुर्दशीपार्वणनिषेध इति मैवं, चतुर्दश्यां भूतिकामः स्वस्तिकामो वेति हारीतेन काम्यपार्वणमपि विहितं तदेवात्र निषिध्यते काम्यत्रयोदशीश्राद्धवत् ॥ वस्तुतस्तु विषशस्त्राहिहतानां यादृक् श्राद्धं विहितं तादृगेवान्येषां निषिध्यते प्रक्रमानुरोधात् ॥ यत्तु ॥ आहवेषु वि·

पन्नानां जलाग्निभृगुपातिनाम् । चतुर्दश्यां भवे-
त्पूजा अमावास्यान्तु कामिकीति कन्यागता
परपक्षप्रकरणस्थदेवीपुराणवचनेन विशेषविधिम
हिम्नार्थादन्येषां तत्रपूजानिषेधइति तन्न इदं हि
वाक्यममावास्यान्तु कामिकीत्युपसंहाराच्चतु-
र्दश्यां शस्त्रहतानां श्राद्धस्यनित्यतां विधत्ते नत्व
शस्त्रहतानां श्राद्धमपि निषेधति उभयपरत्वे
वाक्यभेदापत्तेः । नचात्र गुणप्रधानभावोऽविनिग-
मात् भवतु वा विषशस्त्रहतानां पार्वणनिषेधस्तथापि
सत्रयोदश्यामिवचतुर्दश्यामपि काम्यं पार्वणं निषे-
धेत् चतुर्दशीं भूतिकामः स्वस्तिकामोवेति वदन्हि
हारीतः तत्र काम्यं पार्वणमाह ॥ तथा च त्रयोदशी
वन्निषेधोनस्यात् तस्मान्नित्ये तिथिविधौ चतुर्द-
शीपार्वणं वज्रलेपवदिति प्रदीपमतं ॥ यथोत्नीतं
तथैव तर्ह्यस्त्विवतिचेत् न तर्ह्येकस्मिन्नपराह्णेतिथिद्वय
लाभे तस्य पार्वणद्वयं उत्तरदिनोपराह्णे तत्तिथिला-
भेप्यपार्वणमिति स्यात् । न चेष्टापत्तिः प्रदीपकृत-
स्तथानुपगमात् । तस्मात्सर्वज्ञकल्पेन परममीमां-
सकेन कल्पतरुकृता देवीपुराणवचनाच्चतुर्दशीनि
षेध इति नोक्तं किन्तु सामान्यवचनादेव तन्निषेध
इत्युक्तं तत्र चास्ति तात्पर्यं तद्यथा दिने दिन इति

वीप्सा तिथीन्नालिङ्गाति दिनपदे निर्निमित्तलक्षणा-पत्तेः, किन्तु दिवसानेव । तेनाश्विनापरपक्षे सर्व स्मिन्नेव वासरे श्राद्धं एवञ्च नित्यविध्यस्पृष्टा सर्वैव चतुर्दशी वर्जयित्वा चतुर्दशीमित्यादिना निषिध्य ते अतएवैतत्पक्षश्राद्धानां तिथिकृत्यत्वाभावात् कृ-ष्णादिमासपरिग्रहोत्रासंभवीत्याशङ्क्यआषाढीमवधिं कृत्वेत्यादिवचनं जातूकर्ण्यनाम्ना पठितं कृष्णा-दिमासपरिग्रह प्रमाणयन्तिशिष्टाः । एवञ्चाश्वि नापरपक्षे दिने दिन इति श्रवणात् सर्वस्मिन्नेव दि वसे नित्यं पार्वणं शक्तौ कार्यं वर्जयित्वा चतुर्दशी मित्यादि निषेधस्वरसात् । यस्मिँस्तु दिने दशापि मुहूर्त्ताश्चतुर्दश्यवरुद्धाएव तस्मिन्नपार्वणं निषेध विरोधात् अतएव त्रयोदश्यां पञ्चदश्यां चोत्तरादिने श्राद्धयोग्यमुहूर्त्ताभिव्यापने तदापि पार्वणं वीप्साल-भ्यस्याभ्यासस्य बाधकाभावादितिसर्वं सुस्थम् । पूर्वं दिने रौहणीस्योत्तरादिने कुतपस्य लाभ एकोद्दिष्टं पूर्वं दिन एव विहितकालजीवित्वेन तदैवाधिकारात् । कु-तपस्य प्रशंसामात्रं यदात्वेकस्मिन्नेवदिने गान्धर्वकुत-परौहिणानां लाभस्तदाकुतप एव प्रशस्तत्वात् न च गान्धर्वातिक्रमेण क्षेपशङ्का तथापि मध्याह्नस्याप्र-तिक्षेपादिति ॥ शतपथे । अथ पञ्चैव महायज्ञाः

तान्येव महासत्राणि । भूतयज्ञोमनुष्ययज्ञः पितृयज्ञोदेवयज्ञो ब्रह्मयज्ञइति ॥ छन्दोगपरिशिष्टे ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तुतर्पणम् । होमोदैवोबलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ श्राद्धं वा पितृयज्ञः स्यात्पित्र्योबलिरथापिवा ॥ वाकारौ मतभेदार्थौ । श्राद्धमत्र नित्यश्राद्धं । अत्र यस्य यावति पितृयज्ञेऽधिकारस्तेन तावान् सकर्त्तव्यः । प्रमीतपितृकेण तु श्राद्धाधिकारिणा सतिलतर्पणपितृबलिनित्यश्राद्धानि त्रीण्यपि कार्याणि अधिकाराविशेषात् । नित्यश्राद्धे सएव । अप्येकमाशयेद्विप्रंपितृयज्ञार्थसिद्धये । अदैवं नास्ति चेदन्यो भोक्ताभोज्यमथापि वा ॥ बहूनां श्राद्धिनां बहुनश्चान्नस्याभावे षट्स्वेकमपि ब्राह्मणं तत्र भोजयेत् । अस्याप्यसम्भवे सएवाह ॥ अप्युद्धृत्ययथाशक्ति किञ्चिदन्नं यथाविधि । पितृभ्योथ मनुष्येभ्यो दद्यादहरहर्द्विजः ॥ पितृभ्यइदमित्युक्त्वा स्वधाकारमुदीरयेत् । हन्तकारम्मनुष्येभ्यस्तदन्ते निनयेदपः ॥ पितृभ्य इति । इदमन्नं पितृभ्यः स्वधेति त्यागवाक्यमेवं सिध्यति एवञ्च मिलितानां पितृणामन्त्रवाक्ये देवतात्वप्रतिपादनात् मिलितषड्दैवतमेकान्नोत्सर्गात्मकमिदं श्राद्धं अयञ्च नित्यश्राद्धप्रकारो बलिदानसाहचर्येण कथित इति बलिव

द्रात्रावपिकार्यइति केचित् तन्न पञ्चमहायज्ञान्तर्गतोहि पितृयज्ञः, सच नित्यश्राद्धात्मकः तेन सर्वविधमपि नित्यश्राद्धं त्वन्मते रात्रावपि कार्यं स्यात् । शतपथे बलिसाहचर्यात् । किञ्च वैश्वदेवबलिकर्मणी द्वितीयपाकपक्षे रात्रौ विशेषवचनात् प्राप्ते अतस्ते क्रियेतां श्राद्धन्तु कथं, सन्ध्या रात्र्योर्नकर्त्तव्य मित्यादिनाश्राद्धे तत्पर्युदासात्॥हन्त तथापि नित्यश्राद्धस्य मिलितषड्दैवतत्वे किम्बाधकं, वाधकमपि वक्ष्यामः, साधकमपि नास्ति ॥ पितृभ्य इदमन्नं स्वधेति परिशिष्टप्रयोगकथनमेव साधकमिति चेत् इदं हि न सर्वश्राद्धसाधारणं अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधानम इति प्रत्येकदेवतात्वपरवचनविरोधात्॥ नापि सकलनित्यश्राद्धसाधारणं, षड्ब्राह्मणपक्षे एकब्राह्मणपक्षे च षड्दैवतत्वस्य त्वयाभ्युपगमात् । अथ किञ्चिद्दानपक्षे मिलितदैवतं नित्यश्राद्धमितिब्रूम इति चेन्न द्रव्यह्रासेन देवताह्रासस्यासम्भवात् । परिशिष्टोक्तत्यागवाक्यबलेन देवताह्रास इति चेन्न तस्यात्र पितृभ्यइत्यस्य तन्त्रवृत्या स्वतन्त्रषडुपस्थापकत्वस्यापि सम्भवात् अन्यथा हन्तकारम्मनुष्येभ्यः इत्यत्र मनुष्येभ्य इत्यपि विरुध्येत, नहि तत्र बहुभ्यएव दीयते, नापि मिलितेभ्यः, कि-

न्त्वेकैकस्मै (प्रत्येकं) द्वाभ्यां बहुभ्योवा ॥ अतएवेद
मन्नं मनुष्यायहन्तते इतिवाक्येनैकस्मै दानं विहित-
म्॥ किञ्च परिशिष्ट एव, अमुष्मैनम इत्येव बलिदानं
विधीयत इति त्यागवाक्यं लिखितम्। नचानेन वाक्ये
न बलित्यागः किन्तु पर्जन्यायनम इत्यादिना। अ-
मुष्मैनम इति तु सर्वसंग्राहकत्वेनोक्तं तथात्रापि
पितृभ्य इत्युक्तं देवतात्वन्तु पितृत्वेन पितामहत्वे
नेत्यादि, एवं हि सकलवाक्यैकवाक्यता सम्भवति।
किञ्च मिलितदेवतात्वं श्राद्धकल्पादिषु प्रामाणिक-
निबन्धेषु विस्तरेण खण्डितमिति तदपीह द्रष्टव्यम् ॥
अथ निधिः ॥ ममायमिति योब्रूयान्निधिं सत्येन मा-
नवः। तस्याददीत षड्भागं राजा द्वादशमेव वा ॥ अ
नृतन्तु वदन्दण्ड्यः स्ववित्तस्यांशमष्टमम्। तस्यैव
वा निधानस्य संख्ययाल्पीयसींकलाम् ॥ निधिस्ता
वत्पूर्वनिखातं चिरभ्रष्टधनम्। तच्च स्वनिहितपरनि-
हितभेदाद्द्विधा, तत्राद्ये भागदानमिदं, भागविकल्पो
त्र तत्स्वामिनोनिर्गुणत्वसगुणत्वाभ्यां ममायं निधि
रित्यनृतं वदन्निर्गुणः स्वसर्वस्वस्याष्टममंशं। सगु
णस्तु तन्निधेरेव तदनवसादकरींकलांदण्ड्यः, द-
ण्डोयमनृताभिधानमात्रादिति। द्वितीयेत्वाह।
विद्वाँस्तु ब्राह्मणोदृष्ट्वा पूर्वोपनिहितं निधिम्। अशे

षतोप्यादद्दीत सर्वस्याधिपतिर्हिसः ॥ सर्वस्येति । सर्वस्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम् । आनृशं स्याद्ब्राह्मणानां भुञ्जते हीतरे जना इति ॥ निहितं परेणेति शेषः ॥ तदाह नारदः । परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् । राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ॥ याज्ञवल्क्योपि । राजा लब्ध्वा निधिं दद्याद्विजेभ्योर्द्धं द्विजः पुनः । विद्वानशेषमादद्यात् ससर्वस्य प्रभुर्यतः ॥ इतरेण निधौ लब्धे राजाषष्ठांशमाहरेत् । अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव-च ॥ इतरेणाविदुषा तन्निधिन्दण्डञ्च चत्वारोवर्णा दाप्यायदि निधिं स्वप्राप्तं राज्ञे न कथयेयुः ॥ विष्णुः । राजा निधिं लब्ध्वार्द्धं ब्राह्मणेभ्योदद्याद्वितीयमर्द्धं कोषेप्रवेशयेत् । ब्राह्मणस्तु निधिं लब्ध्वा स्वयमाद-द्यात् । क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात् चतुर्थमंशं ब्राह्मणेभ्योदद्यादर्द्धमादद्यात् । वैश्यश्चतुर्थमंशं राज्ञे दद्यात् ब्राह्मणेभ्योर्द्धमंशं स्वयमादद्यात् । शूद्रश्चावाप्तं द्वादशधाविभज्य पञ्चांशान्राज्ञे पञ्चांशं ब्राह्मणे-भ्योंशद्वयमादद्यात् । अनिवेदितविज्ञातस्य सर्वं स्वमाहरेत् ॥ परनिहितं निधिं लब्ध्वा राजन्यकथ-यतो राज्ञा सर्वस्वनिधी प्राह्यौ कथयतस्तु यथोक्तो वि-भागइत्यर्थः ॥ आकरविवाहावेकग्रन्थेनैव रक्षार्थमाह

वसिष्ठः। उद्वाहाकरांस्त्वागमयेत्॥ कस्य केन विवाहो युज्यत इति विवाहव्यवस्थारक्षणार्थन्तथानिरूपयेत् आकरशुद्धिञ्च तदनुरूपकरग्रहणार्थं जानीयात् ॥ आकराधिकृताहि प्रायेण छाद्मिकाभवन्ति ॥ अथ ग्रहणस्नानम् ॥ सूतके मृतके चैव ग्रस्तयो श्चन्द्रसूर्ययोः। अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥ इत्याचारचन्द्रलिखितवाक्यबलाद्यथा सूतके मृतके च ग्रहणस्नानादावधिकारस्तथा क्षतिनोभुक्तवतश्चास्तु प्रयत्नानपनेयत्वे नानयोरप्यशौच-योस्तदुभयप्रख्यत्वात् ॥ नच तत्र सूतकत्वं मृतकत्वं वा विवक्षितं वाक्यभेदापत्तेरिति मैवं यावद्वचनं हि वाचनिकमित्येतद्बलेन वाचनिक-विधेर्न्यायाननुरोधित्वात् । यद्वैकवाक्यतार्थन्तु सूतकमृतकान्यतरत्वमेवावच्छेदकमस्तु द्वादशाहिक-गवामयनिकाद्यन्ताहान्यतरत्ववत् । वस्तुतस्तु वाक्यमेवैतदनाकरमतोन किञ्चिदेतत्॥ शातातपः ॥ अहोरात्रन्तु नाश्नीयाच्चन्द्रसूर्यग्रहोयदा । मुक्तं दृष्ट्वातु भुञ्जीत स्नानं कृत्वा विधानतः ॥ सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः । धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत् ॥ एतच्चाहोरात्रा-नशनं काम्यं फलोक्तेः, कामनाविरहेतु दृष्ट्वा

श्नीयाच्च मुक्तयोरित्यभिधानादेव मुक्तयोश्चन्द्रसूर्य योरनुपदमस्तङ्गतयोरपि मुक्तिं प्रमाय भोक्तव्यं स्नात्वाऽश्नीयाच्च मुक्तयोरितिवचनात् ॥ यत्तु स्नात्वा दृष्ट्वा परेह्न्यद्याद्ग्रस्तास्तमितयोस्तयो रितिज्योतिर्वचनेन तथा चन्द्रार्कोपरागे नाश्नीया त्स्नात्वामुक्तयोरश्नीयाद मुक्तयोस्तयोरस्तङ्गतयोर्दृष्ट्वा स्नात्वापरे हनिचाश्नीयादिति विष्णुवचनेनच ग्रस्तास्तयोर्मुक्तिदर्शनपर्यन्तमनशनमुक्तं तदावश्यकं निष्फलनिर्देशात्। अतएव ग्रस्तास्तयोश्चन्द्रसूर्ययोर्मुक्तिदर्शनपर्यन्तमभोजनं निष्कामकार्यमिति रत्नाकरोपीति ॥ अथ वपनम्। प्रयागे वपनङ्कुर्यादित्युत्पत्तिवाक्य दर्शनेन लौकिकवाक्येऽपि करिष्य इत्येवयुक्तम्। न चास्मदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्याम ह इति वाच्यं आर्षपदप्रयोगे ऽस्मिन्नस्मदायत्तत्वस्यैवाभावात् तथाच गङ्गापतिष्यदित्याद्युपक्रम्य वपन महङ्करिष्य इत्येव वाक्यं कार्यमितिकेचित् तन्न नहि प्रयागे वपनं कुर्यादित्युत्पत्तिविधिः, एन्द्रन्दधिमवत्यमावास्यायामितिवत्कर्मशरीरापरिचायकत्वात्। किन्तु सोमेन यजेतेतिवत्क्रियाविधिः। अस्त्वेवं तथापि करिष्य इत्यत्र किमुत्तरं ॥ इदमुत्तरम् ॥ केशानां यावती संख्याच्छिन्नानां जाह्नवीजले । तावद्वर्ष

सहस्राणि स्वर्गलोके महीयत इत्यर्थवादः प्रयागे वपनंकुर्यादित्यत्र विधौ नान्वेति । प्रयागगङ्गयोर्भेदात् । नचैकवाक्यताबलाद्विध्यर्थवादाभ्यां प्रयागावच्छिन्नगङ्गायामेव वपनं प्रत्याय्यत इति वाच्यम् किङ्गयापिण्डदानेन काश्यां वा मरणेन किम् । किंकुरुक्षेत्रदानेन प्रयागे वपनं यदिइति प्रयागमुण्डनार्थवादस्य पृग्थभूतस्यसत्वात् ॥ मुण्डनञ्च परिवापणं तथा च प्रयागे वपनं कुर्यादिति यदि विधिः तदापि वापने णिचोलोपेन वपने सिद्धे विध्यर्थवादैकवाक्यतया परिवापणे फलान्वयेन गयापिण्डदानजन्यफल समफल काशीमरणजन्यफलसमफलकुरुक्षेत्रदानजन्यफल समफलप्राप्तिकामः प्रयागे वपनमहङ्कारयिष्य इति वाक्यं निर्वहति । प्रयागेच मुण्डनं गङ्गानैरपेक्ष्येण, गङ्गायाम्भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ । आधाने सोमपाने च वपनं सप्तसु स्मृतमिति कालिकापुराण वाक्येन भास्करक्षेत्रपदेन प्रयागक्षेत्रस्य गङ्गानिरपेक्षस्यैव वपनाधारत्वप्रतिपादनात् । कुतस्तर्हि गङ्गायां प्रयागे वपनं,गङ्गायांभास्करक्षेत्र इति वचनादेव ॥ हन्त तर्हि प्रयागानवच्छिन्न गङ्गायामपि वपनंस्यात्, न स्यात्, मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा गयां गङ्गां विशालां विरजान्तथेत्यनेन

गङ्गायां वपननिषेधात् ॥ यावन्ति नखलोमानि वायुना प्रेरितानि वै । पतन्ति जाह्नवीतोये नराणाम्पुण्यकर्मणाम् ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते । केशानां यावती संख्या छिन्नानां जाह्नवीजले ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ इत्याद्यर्थवादेन गङ्गापरिवापणेपि फलप्रतीतेः एवञ्च प्रयागावच्छिन्नगङ्गायां परिवापणे आर्थवादिकंफलं तदनवच्छिन्नगङ्गायान्तु परिवापणनिषेधात् ॥ अथागम्यदेशाः ॥ तथाहि कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेवच । प्रनष्टाश्रमधर्माश्च देशावर्ज्याः सदैवहि ॥ कृष्णसारो विचरति मृगो यत्र स्वभावतः । सज्ञेयो यज्ञियोदेशोम्लेच्छदेशस्ततः परः ॥ विष्णुः ॥ म्लेच्छदेशं न गच्छेन्न तत्र श्राद्धं कुर्वीत । कृष्णसारचरोपि मगधादिरगम्यदेशः॥ तदुक्तं ब्रह्मचारिकाण्डे। आनर्त्तकाङ्गमगधाः सुराष्ट्रादक्षिणापथः । उपावृत् सिन्धुसौवीरा एते सङ्करयोनयः ॥ तथा (१) आन्ध्रान् कारस्करान्वङ्गान्सौवीराङ्गकालिङ्गकान् । प्रासूरांश्च तथा गत्वा पुनस्तोयेन योजयेत् ॥ तेनैतेषां गमने पुनः संस्कारः ॥ तथा । अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति ॥

(१) आवन्त्यान् कारस्करान् इति प्रथमचरणे पाठान्तरम् ॥

तीर्थयात्राप्रसङ्गेनैषां गमनमदुष्टमित्यर्थः । तीर्थयात्रां विनापि गङ्गाक्षेत्राद्यवच्छिन्नमगधादिसञ्चारे न दोषः । न श्मशानं न चादेशो गङ्गायां परिकीर्त्यत इतिगङ्गामाहात्म्यलिखनात्।कर्मनाशायास्तु सन्तरणं निषिद्धं धर्मनाशे कर्मनाशापारगमनवदित्याधेयशक्तिस्थले शास्त्रलिखनात्॥मनुः।अज्ञानात्प्राश्यविण्मूत्रं सुरासंस्पृष्टमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ पुनः संस्कारे विशेषमाह सएव, वपनं मेखला दण्डो भैक्षचर्याव्रतानि च।निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥ होममात्रं कार्यमित्यर्थः ॥ अथ प्रशस्तकुशाः ॥ मासे नभस्यमावास्या तस्यां दर्भोच्चयोमतः । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ एतद्वाक्यबलाद्भाद्रामावास्याहृताः कुशाअयातयामाः;अन्यदा तु न कुशोच्चयोऽनभिधानात् । यत्तु । दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाहविरग्नयः । अयातयामन्येतानि (वि)नियोज्यानि पुनःपुनः ॥ इदमपि दर्भपदं भाद्रामावास्याहृतदर्भपरमेव, भिन्नवक्तृकयोः सामान्य विशेषवचसोरेकमूलकल्पनानुरोधाद्विशेषविषयत्वमेव, एकवक्तृकयोस्तु तयोर्गोवलीवर्दन्यायेनान्वयः। तृतीये च तथा भागे स्नानार्थं मृदमाहरेत् । समित्पुष्पकु

शादीनि स्नानञ्चाकृत्रिमे जले ॥ इत्यादिना प्रत्यहं मध्याह्नस्नानात्प्राक्कुशाहरणविधानात् । एवञ्च ये कुशास्तद्दिनाहृता ये वा भाद्रामावास्याहृता उभयेषामपि तेषां कर्मार्हत्वं नत्वन्येषामनभिधानात् एतेपि स्तरणासनापिण्डविनिर्युक्ताः कृतपितृतर्पणाश्च त्याज्याः । स्तरणासनपिण्डेषु यैः कृतं पितृतर्पण मित्याभिधानात् ॥ द्वितीयवस्त्रस्थाने तृतीयमुपवीतं कुशरज्जुं वेतिवचनात्तत्परमेव, नीवीबन्धे च ये दर्भा यज्ञसूत्रे च ये धृताः । पवित्राँस्तान्विजानीयाद्यथा कायस्तथा कुशाः इति ॥ नहि रज्जुभूतवासः स्थानीयकुशातिरिक्त कुशधारणं यज्ञसूत्रे क्वापि श्रूयतइति ॥ षट्पुरुषतर्पणे स्वधा नम इति वाक्यं । मात्रादितस्तु स्वधेत्येव, यदाह योगियाज्ञवल्क्यः ॥ यदि स्याज्जीवत्पितृक एतान्दिव्यान्पितॄँस्तथा । येभ्यो वापि पिता दद्यात्तेभ्यो वापि च दापयेत् । एताँश्च वक्ष्यमाणाँश्च प्रमीतपितृको द्विजः ॥ वसून्रुद्राँस्तथादित्यान्नमस्कारस्वधान्वितान् । एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ॥ आचार्यान् स्वान्पितॄँश्चैव पितृप्रभृतिनामतः ॥ तथा माता मातृष्वसा चैव मातुलानी पितृष्वसा । दुहिता च स्वसा चैव शिष्यर्त्विग्ज्ञातिबान्धवाः ॥ ना-

मतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वशः । एतान् दिव्यपितॄन् वक्ष्यमाणान् स्वपितॄन् स्वधानम इति वाक्ये न तर्पयेत् । मातृतस्तु स्वधाकारेणैव सर्वांस्तर्पयेदित्यर्थः । तत्र कल्पतरुमते अमुकसगोत्रोऽस्मत्पिताऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधानम इति वाक्यम्, एवं वृद्धप्रमातामहान्तं, मात्रादितस्तु स्वधाकारमात्रम् । रत्नाकरमते तु गोत्रसगोत्रयोः पर्यायत्वेनामुकगोत्र इति पदिन्यायेन स्वलाभात्पितेति, तेनामुकगोत्रः पितामुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधानमः इति वाक्यम्, एवं वृद्धप्रमातामहान्तं, तदनन्तरन्तु स्वधाकारमात्रम् । प्रदीपस्तु कल्पतरुवत् ॥ श्रीदत्ताह्निके तु सपदास्मत्पदनमः पदानि न सन्ति तेनामुकगोत्रः पितामुकशर्मा तृप्यतामिदं तिलोदकन्तस्मै स्वधा इति वाक्यम् ॥ एवं सर्वत्र ॥ अत्र कल्पतरुमतमेव श्रेष्ठमित्युक्तं प्राक् ॥ निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः । न ब्रूयादक्षरसमं न तन्निगदितम्भवेत् ॥ तथा ॥ न्यूनमभ्यधिकं वापि प्रब्रूयुर्यस्य साक्षिणः । तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः ॥ त्वं मह्यं हेम्नां शतस्य धारयः, मत्तः प्रतिदेयतया गृहीतत्वाद्धेमकत्वात् इति भाषायां नेत्युत्तरे अर्थ्युपन्यस्ते-

न साक्षिणा अनिगदे न्यूननिगदे अधिकनिगदे संख्यारहितद्रव्यनिगदे वा नैकतरस्यापि वादिनः प्रतिज्ञातार्थे सकले सत्यप्रतिज्ञत्वलक्षणो जयो भवति तेनैते सर्वेअनिगदाः। यस्तु निगदः कण्ठतोऽर्थतो वा एकतरस्य वादिनः सकलप्रतिज्ञातार्थविजयपरः ससन्निगद उच्यते। अयन्तु विशेषो यन्न्यूननिगदे तावत्यंशेऽर्थिनो जयएव। प्रतिज्ञातार्थानभिव्यापकतया तु सकलजयाप्रतिपादकत्वेनानिगदोक्तिः, तथाचान्यतरवादिप्रातिज्ञातार्थसकलजयपरत्वमिह सन्निगदत्वं तद्व्यतिरेके त्वसान्निगदत्वं न्यूनाभिधायीतु प्रामाण्यसम्भावनया परिगृह्यते अधिकाभिधायी तु स्फुटप्रमादत्वेन अज्ञानाभिधायी मूकश्चार्थास्पर्शात्परिगृह्यतेऽपि नेति प्रदीपपवित्रीकृतः पन्थाः॥ ननु यस्याशेषं प्रतिज्ञातं साक्षिभिः परिवर्णितम्। स जयी स्यादन्यथा तु साध्यार्थं न समापयेदिति वचनादनिगदाल्पनिगदौ भङ्गएवेति चेन्न न समापयेदित्यनेनासमापनाभिधानेन व्यतिरेकसमापनस्याभिधानात् नञश्च क्रियान्वयात्। तिस्रो हि कोटयो भवन्ति स्वपक्षावधारणं परपक्षावधारणमुभयानवधारणञ्चेति। अथ ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्। तत्सिद्धौ सिद्धिमा-

प्नोति विपरीतमतोन्यथेति याज्ञवल्क्यवाक्ये अर्थी प्रतिवादी सतावत्कृतकारणोत्तरः तत्र प्रमाणमाह तस्य तु सिद्धौ सिद्धिं विजयं प्राप्नोति अतोन्यथा तस्य प्रमाणस्यासिद्धौ विपरीतं भङ्गमाप्नोतीतिता वदर्थस्तत्कथं तृतीया कोटिर्भवत्विति चेन्न इदं हि वाक्यं नागमवत्स्वतः प्रमाणं किन्तु न्यायोपष्टम्भेन तदुक्तं केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायत इति ॥ अज्ञाननिगदादौ तु न भङ्गांशे न्यायः । अज्ञातस्य जयभङ्गयोर्न्यायाविशेषात् अतएवान्यथावादिनो विपरीतवादिनइति रत्नाकरेपि विवृतम् । अन्यथा संख्याभेदस्य देशभेदस्य कालभेदस्य वा निगदाद नेकविधोन्यथावादस्तत्र च सर्वत्र भङ्गइत्यभ्युपगमे कथं रत्नाकरकृदन्यथावादं समकोचयत् तत्वनिर्णय स्यावश्यकर्त्तव्यत्वाच्च ॥ ननु तत्त्वनिर्णयो न शक्यः तथा हि परम्परीणमेव स्वक्रीतत्वेनाक्षिप्य नेत्युत्तरावबो धे सत्यर्थी साक्षिणं निगादयति सचायमनेन न क्रीत इति निगदति तत्र साक्षिणोऽन्यथावादेन भाषितुर्हा सस्वामिन एव भङ्गो भवति तत्कथं तत्त्वनिर्णय इति उच्यते वाद्युक्तसाधनप्रयुक्तस्तदुक्तसाध्यनिर्णयस्तथा वादकथोक्तहेत्वाभासप्रयुक्तः साध्याभावनिर्णयस्तत्व

निर्णय इत्युच्यते ॥ यस्मिन्भाण्डे आमिषं भृतं तस्मिन्भाण्डे यत्साधितं तद्ब्रह्मचारिणा न खाद्यम् आमिषस्य तु योभाण्डे पक्वमश्नातिसव्रती । कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेदिति हारीतवचनात् ननु स्त्रीणां न पार्वणं न यो· पिभ्यः पृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डमा त्राभ्यस्तृप्तिरासां यतः स्मृतेति निषेधस्मृतेः गया· न्वष्टकादौ तु श्राद्धं विशेषवचनात् । पुंसान्तु पा· र्वणं सकलपुत्रकर्त्तव्यं कतिपयकर्त्तव्यमौरस मात्रकर्त्तव्यं वेति ॥ ननुचापुत्रा ये मृताः केचित्स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादे कोद्दिष्टं न पार्वणमित्यत्र पुत्रपदमौरसपरमतऔर सेनैव पार्वणं कर्त्तव्यं न पुत्रिकापुत्रादिना तेषाम· मुख्यपुत्रत्वेन पुत्रपदस्य तत्र लाक्षणिकतया युग· पदुभयाभिधाने युगपद्वृत्तिद्वयविरोधापत्तेरिति मैवं एवं हि सति पुत्रिकापुत्रे मातुः प्रथमतः पिण्डं नि र्वपेत्पुत्रिकासुतः । इत्यादि पार्वणोपदेशविरोधः स्यात् ॥ ननु तर्हि स करोतु, क्षेत्रजादिर्माकार्षीदिति चेत् न त्रयः पिण्डाश्च पण्णां स्युरित्यादिना तस्यापि पार्वणोपदेशात् ॥ अस्तु सोपिपार्वणाधिकारीति चेत् दत्तकस्यापि पार्वणोपदेशात्, तथा च औरसपुत्रिका

पुत्रक्षेत्रजदत्तकानाञ्चतुर्णामपि तदधिकारे कथं न त्वन्मते युगपद्वृत्तिद्वयविरोधः स्यात्। किञ्च पितुः पुत्रेण कर्त्तव्यापिण्डदानोदकक्रियेतिवाक्ये पुत्रेण द्वादशविधेनेति रत्नाकरव्याख्या कथं घटतां युगपद्वृत्तिद्वयविरोधात् किञ्च पुन्नामनरकत्राणकर्तृ पुरुषत्वं पुत्रपदे प्रवृत्तिनिमित्तं तच्च द्वादशस्वप्यविकलमेव।हन्तैवं द्वादशापिपुत्राःपार्वणाधिकारिणः स्युः तेषामन्यतमसत्वेपि प्रमीतस्यापुत्रत्वाभावात् मैवम् अपुत्राणां न पार्वणमित्यनेनापुत्राणां पार्वणं निषिध्यते न तु सपुत्राणां पार्वणमनेन विधीयते उभयार्थपरत्वे वाक्यभेदापत्तेः।मा विधायि न्यषेध्यपि न तेषामपुत्रत्वाभावात्, तथा च केषां पार्वणमिति सुहृद्भावेन पृच्छामीति चेत् येषामयमधिकारी पुत्रः पौत्रः प्रपौत्रश्च तेषामयं पार्वणकृत् औरसक्षेत्रजपुत्रिकापुत्रदत्त्रिमास्त्वेवं, कृत्रिमादयस्तु नैवं सहि पुत्रकृरस्य पुत्रो भवति नतु तत्पितुः पौत्रः न वा सोऽस्य पितामहः अस्य हि वाचनिकं पुत्रत्वं तत्तु यावद्वचनमेव न ह्यौरसक्षेत्रजपुत्रिकापुत्रवदत्र शरीरान्वयोस्ति । कथन्तर्हि दत्तककर्तृकं पार्वणं तस्यापिशरीरान्वयाभावात्। ऋक्थगोत्रे जनयितुर्न्न हरेद्दत्रिमः सुत इत्यादिना तस्य गोत्रपरीवर्त्ताभि

धानेन कुलपरीवर्त्तस्याप्यभिहितप्रायत्वात् उत्तरे-
णैव पित्रा तस्य षट्पुरुषत्वसिद्धेः ॥ यत्तु एकपाकेन
वसतां पितृदेवद्विजार्चनम् । एकम्भवेद्विभक्तानान्त
देव स्याद्गृहे गृहइतिवचनादौरसनामेव पार्वणा-
धिकार इति तन्न दत्तकादौ गृहीते पश्चादौरसे जाते
एकपाकेन तेषां वासे पश्चाद्विभागे पृथक् पञ्चयज्ञा
चरणे औरसानौरसानामपि प्रकृतवाक्यार्थसम्भ-
वात् । औरसे जाते दत्त्रिमादयोपि भागभाजः ।
सर्वेह्यनौरसस्यैते पुत्रादायहराः स्मृताः । औरसे तु
पुनर्जाते ज्यैष्ठ्यन्तेषां निवर्तते इत्यादिना औरसस-
त्त्वे ज्येष्ठत्वं निषिध्यते अंशस्तुतेषांलघुर्भवत्येव ॥
अपुत्रेण सुतः कार्यो यादृक्तादृक् प्रयत्नतः । पिण्डो
दकक्रियाहेतोर्नामसङ्कीर्त्तनस्यचेत्यत्राप्यपुत्रेणेत्यस्य
औरसपुत्रिकापुत्ररहितेनेत्यर्थः ॥ आज्यं विना
यथा तैलं सद्भिः प्रतिनिधीकृतम् । तथैकादश पुत्राः
स्युः पुत्रिकौरसयोर्विनेति बृहस्पतिना औरसपुत्रिका
पुत्रयोर्द्वयोरेवाभावे पुत्रान्तरस्य प्रतिनिधिभूतस्यो-
पादानविधानात् । एवञ्चैतयोर्द्वयोरेकवाक्यता-
नुरोधादपुत्रेणेति पुत्रपदमौरसपुत्रिकापुत्रपरमेव ॥
किन्तु क्षेत्रजादयो न पुत्राः किन्तु यवाभावे गोधू
मवत्तत्प्रतिनिधयः, तदुक्तम् । क्षेत्रजादीन् सुतानेता

नैकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रिया लोपान्मनीषिण इति ॥ एते हि प्रतिनिधयः क्रिया लोपप्रसङ्गादुपादीयन्ते । तथा हि अपत्यमुत्पादनीयमित्ययं तावद्गृहस्थमधिकृत्य विधिः प्रवर्त्तते ॥ जायमानो हि वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवाञ्जायते ॥ इति श्रुतेः । जायमानोगृहस्थः, सम्पद्यमान इति तद्विवरणाच्च ॥ साचापत्योत्पादनक्रिया गृहस्थस्यावश्यकी नरकपातहेतुपितृऋणस्यापाकरणीयत्वात् । नित्ये च विधौ मुख्यासम्भवे प्रतिनिधेरुपादानं युक्तमत्र सोमालाभे पूतिकोपादानवदिति ॥ अत्रोच्यते, बहूनामेकजातानामेकश्चेत् पुत्रवान्भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ इत्यादिना तावत्सति भ्रातृजे पुंसः, सति च सपत्नीपुत्रे स्त्रियाः पुत्रित्वमतिदिश्यते, अतिदेशश्च न स्वरूपस्य सम्भवति तत्र हि स्वरूपसत्त्वे उपदेश एव स्यात् । तस्मात्पुत्ररहिते पुत्रिधर्मातिदेशोऽयम् ॥ सच धर्मः पुंसामपुत्रत्वप्रयुक्तनरकपात ऋणत्रयग्रस्तत्वाद्यभावः, स्त्रियाञ्च सपिण्डीकरणार्हत्वमिति ॥ ननु फले भ्रातृजोत्पत्त्यादिना सिद्धेऽपि नित्यविधिविषयीभूतापत्योत्पादने

भावनायास्तथाप्यसिद्धेरपत्योत्पादना कार्यैवेति चे-न्नैवम् अपत्यमुत्पादनीयमित्ययंविधिः, सन्ध्यामुपासीतेति वन्न नित्योयेन तद्वदपत्योत्पादनं कर्तव्यमेव किन्तु फलस्यावश्यमुपादित्सितत्वेन तदुपायोऽप्यवश्यानुष्ठेय इति । तथा च फलं चेदन्यतएव जातं तदा तदिच्छानुदयादुपायेच्छाऽपि व्यरंसीदिति कथमुपाये प्रवर्ततां प्रवृत्तिकारणीभूतेच्छाविरहादिति ॥ अतएव सति भ्रातृजे सति च सपत्नीपुत्रे कृत्रिमादयो नोपादेया इत्यसहायोदयकरपारिजात रत्नाकरादयोऽप्याहुः ॥ ननु एष्टव्या बहवः पुत्राइत्यादि स्मरणादौरसवत्कृत्रिमादयोबहवउपादीयेरन्निति चेन्न अत्र पुत्रपदस्यौरसपरत्वात् अश्वमेधसाहचर्यात्। तत्र हि यजमानस्य पितर्यपि स्वर्गः॥ हन्त तर्हि युधिष्ठिरः कथमश्वमेधमकरोत् नह्रि सकस्याप्यौरसः, कुन्ती वा कथं त्रीन् क्षेत्रजानुपात्तवतीति चेत् ते हि देवकल्पास्तेन तेषामाचारो न पुरस्करणीयो न वा तिरस्करणीयः । तदुक्तम् । कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा । नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेदिति ॥ बह्वीनामेकपत्नीनामिति वाक्येन सपत्नीपुत्रे पुत्रत्वमतिदिश्यते अत्र बह्वीनामेकपत्नीनामेषएवविधिः स्मृतः । एका

र्मोऽतिदिश्यते, तस्य च फलं भ्रातृजे मनि कृत्रिमाद्य करणम्, स्त्रियान्तु पुत्रिणीधर्मोऽतिदिश्यते तस्यतु फलं सपिण्डनार्हत्वादीति ॥ ) विष्णुः ॥ सपिण्डी करणं मासिकार्थवद्द्वादशाहं कृत्वा त्रयोदशेऽह्नि कुर्यात् मन्त्रवर्जं शूद्राणां द्वादशेऽह्नि सम्वत्सराभ्यन्तरे यद्यधिमासपातो भवेत्तदामासिकार्थन्दिनमेकं वर्द्धयेदिति । अस्यार्थः । द्वादशाहं प्रेतस्याप्यायनरूपप्रयोजनशालि कृत्वा त्रैवर्णिकस्त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यात्, शूद्रस्तु द्वादशेऽह्नि, तदपि वैदिकमन्त्रवर्जम् । अत्र मरणदिनाद्वर्षपूर्त्तिपर्यन्तं यद्यधिमासः पतति तदा मलमासीयमासिकार्थन्दिनमेकमधिकं कर्त्तव्यं तेन त्रैवर्णिकेन चतुर्दशादिने शूद्रेण तु त्रयोदशादिने सपिण्डीकरणं कार्यमिति प्रतिहस्तकाः । वस्तुतस्तु मलमासपातेपि त्रैवर्णिकेन त्रयोदशएव दिने शूद्रेण तु द्वादशएव दिने सपिण्डीकरणं कार्यं मलमासस्थानपतिते तु दिने मासिकद्वयं, मासिकार्थवद्द्वादशाहं कृत्वा त्रयोदशेऽह्नि कुर्यादिति नित्यवच्छ्रवणात् । नचेदं मलमासपातमात्रपरं, सङ्कोचापत्तेः । अथ द्वादशमासके वर्षे मासिकानां द्वादशादिनानि गणनासिद्धान्येव तेन त्रयोदशमासके वर्षे मासिकानां त्रयोदशादिनानि

भवन्तिवनिचेत् अस्त्वेवं तथापि मासिकार्थेन्दिन-मेकं वर्द्धयेदिति मासिकविशिष्टदिनविधिर्वा, दिन-मात्रविधिर्वा मासिकमात्रविधिर्वा । नाद्योगौरवा त्। नचानन्यगतिकत्वान्नायन्दोषोऽन्यथोपपत्तेर्वाच्य-त्वात् । नापरः, तथासति ऋष्यशृङ्गवचनेन त्रयोद-शमासिकनिषेधकेन सहास्य विकल्पशङ्कापिन विषमशिष्टत्वाभावात् । केवलदिनविधिर्विफल इति तस्माच्चरमः पक्षोज्यायानिति दिक् ॥ तदयमत्रा नुष्ठानक्रमः । यदि द्वादशभिर्दिनैर्मासिकानि तदा मलमासस्थानादिने मासिकद्वयं, कल्पान्तरेषु तु स-र्वेषु शेषे त्रयोदशं मासिकमिति ॥ प्रेतषोड शी च द्वादशप्रतिमास्यानीत्यादिना कात्यायनो-क्ता एका, नृणान्तु त्यक्तदेहानामित्यादि ब्रह्मपुराणो क्ताऽपरा, अनयोस्तु विकल्पः प्रेतत्वविमुक्तिरूपे फले परस्परनिराकांक्षतया एकैकमन्वयात् व्रीहियववत् । अयञ्च विकल्पो न तावदव्यवस्थितोऽष्टदोषग्रासात् । नापि शाखाभेदेनोदितानुदितहोमवद्व्यवस्थितः, तेनावीरापरशवर्योर्ब्रह्मपुराणीयएव कल्पः बाधकाभा वात् । तयोश्च सपिण्डीकरणनिषेधेन तद्घटितस्य कातीयकल्पस्य तत्राप्रवृत्तेः, अन्येषान्तु कातीयए वेति ॥ अस्त्वेवं तथापि सपिण्डीकरणे तावत्सावका

शतया निषेधशास्त्रं लगति तेन यस्य प्रेतस्य सर्वेषु स-
पिण्डनादिनेषु निषिद्धनक्षत्रान्वयः तस्य तावत्सपिण्ड-
नं नास्ति निषेधविरोधात् तेन तस्य ब्रह्मपुराणीयएव
कल्पः ॥ ननु तस्यापि वत्सरान्ते निषिद्धनक्षत्रेपि सपि-
ण्डनमनन्यगतिकत्वादितिचेत् अस्त्वेवं तथापि येना-
दावेव सपिण्डनकालानिषिद्धनक्षत्रवन्तोऽत्रगताःस-
किङ्करोतु । न तावन्निषिद्धनक्षत्रेपि सपिण्डीकरणमेव,
सपिण्डीकरणान्तानि प्रेतश्राद्धानि षोडश । यथा
कालन्तु कार्याणि नान्यथा मुच्यते तु स इतिनिन्दा
वचनात् तस्मादगत्या पितुरपि ब्रह्मपुराणीयकल्पा
चरणमेव परिशेषादिति ॥ अत्र कल्पे, चतुर्थे पञ्चमे
चैव नवमैकादशे तथा । ततो द्वादशभिर्मासैः श्रा-
द्धाद्वादशसंख्यया ॥ इति श्रवणात् ॥ अत्र चतुर्थत्वं
मरणदिनापेक्षया, प्रेतकृत्ये तस्यैवावधित्वेन द्राक्प्र
तीतेः ॥ ननुचावीरामरणाशौचात्ययेऽधिकारिणा त-
च्छ्रवणे श्राद्धलोपः स्यात् तन्मरणाद्धिकचतुर्थदि-
नाद्यमासेरिति चेत् न मरणपदेनात्र प्रकृताशौचाद्य
दिनस्य विवक्षितत्वात् । अत्र च कल्पे अशौचोत्पत्ति-
दिनाच्चतुर्थे दिने सङ्कल्पः स यथा ओं अमुकगोत्र-
स्य अमुकशर्मप्रेतस्य अमुकदेवीप्रेताया वा प्रेतत्ववि-
मुक्तिकामोऽद्यादियथाकलं षोडशश्राद्धान्यहङ्करिष्ये ।

ततः ओं अद्यामुकगोत्रस्यामुकशर्मप्रेतस्य अमुक देवीप्रेताया वा प्रेतत्वविमुक्तिहेतुषोडशश्राद्धान्तर्गतचतुर्थदिनश्राद्धमहङ्करिष्ये । ब्रह्मपुराणोक्तरीत्येति तु न कर्त्तव्यं अन्यथा कातीयेपि कात्यायनोक्तषोडशश्राद्धानीति वाक्यशरीरं स्यात् ॥ एकादशाहे कल्पा न्तरस्याप्रसक्ततया वारणीयाभावान्न तथा क्रियत इति चेत् तुल्यमिहापि नहि चतुर्थदिवसे ब्रह्मपुराणोक्तकल्पादन्यस्यारम्भः प्रसज्यते ॥ अत्र च यदेकोद्दिष्टमशौचव्यपगमे प्रथमतआयाति ततः प्राक् शय्याकाञ्चनपुरुषदाने दम्पतिपूजा वृषोत्सर्गौ कपिलगवीदानञ्चाविरुद्धानीति प्रकृताशौचव्यपगमे तेषां पञ्चानां काम्यानां विधानात् ॥ अत्र तु कल्पे मासिकानि नापकृष्य क्रियन्ते । ततो द्वादशभिर्मासैः श्राद्धाद्वादशसङ्ख्ययेत्यभिधानात् समयान्तरस्य चानभिधानादिति॥एकादशमासाभ्यन्तरे त्वधिमासपाते अत्रापि विष्णूक्ता मासिकवृद्धिरिति ॥ एकेन पुत्रेणारब्धा षोडशी तस्यापचारेऽपरेणापि समापनीया अधिकारिकृतषोडश्याएव लाघवेन प्रेतत्वविमोचकत्वात् नत्वेकाधिकारिकृतषोडश्याः, गौरवेणैकत्वस्यानादेयत्वात् । नच सपिण्डीकरणं मासिकार्थवद्द्वादशाहं कृत्वा त्रयोदशेह्नि कुर्यादित्यत्र-

क्त्वाबलात्समानकर्तृकताप्रतीतेरेककर्तृकत्वसिद्धौ एकाधिकारिकृतत्वं प्रमाणात्लिङ्गमतोगुर्वपि न हेयमिति वाच्यं नह्यत्र कर्त्रभेदोऽपि विधेयः समायाकांक्षायामस्यप्रवृत्तेः तस्मादेककर्तृकत्वमविवक्षितमनाकाङ्क्षितत्वात् पक्षप्राप्तानुवादोवा ॥ अथ सप्तदशावराः सत्रमुपासीरन् यएव यजमानास्तएव ऋत्विजः इति तावत्सत्रे श्रूयते तथाच तत्रैकतमापचारे न ऋत्विगन्तरकरणं किन्तु साम्युत्थानं अधिकारिलोपात् तथाऽत्राप्यस्तु अन्यथैनद्दत्सत्रेप्यधिकारिलोपेऽधिकार्यन्तरकल्पने आसहस्रवर्षं सत्रमुपासीरन्नित्यत्र सहस्रपदं मुख्यार्थकमेव स्यात् तथाचापसिद्धान्त इति सत्राधिकरणविरोधान्नैवमिति चेत् न सत्रे हि स्वगतफलकामोधिकारी सएव नियोज्यः सएव च कर्त्ता तेन तेषामेकतमस्यापचारे युक्तं साम्युत्थानं अत्र तु पितृगतफलकामनया ज्येष्ठस्तदपचारे कनिष्ठोप्यधिकारी सतः स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानाश्रयत्वात्सानियोज्योपि ततः कर्त्ताभवतीति न किञ्चिदनुपपन्नम् ॥ ननु यद्यप्यस्याधिकारित्वकर्तृत्वनियोज्यत्वानि सम्भवन्ति तथापि फलकामनापूर्वकः कुशतिलजलत्यागोनाम्भूत् सोपि च शास्त्रार्थ इति प्रक्रमाधि

करणे इत्यादितं तथाच तद्रूपस्याङ्गस्य विरहादिदं कनिष्ठेन शेषेऽनुष्ठितमपि निरर्थकं स्यात् इतिचेन्मैवं काम्ये करणीभूतस्य विषयत्वं करणीभावश्च सर्वाङ्गसम्पन्नस्येति तिर्यगधिकरणे सिद्धान्तनादतस्तथा, आवश्यके हि विषयीभूतस्य करणत्वं विषयीभावश्च प्रधानमात्रस्य सन्ध्यामुपासीतेत्यादौ सन्ध्यावन्दनक्रियायाएवविषयीभावप्रतीतेः तेन तत्राङ्गहानावपि फलसिद्धिरितिसर्वशक्त्यधिकरणे सिद्धान्तनात् अतएव नैमित्तिक्यां स्फ्याश्लिष्टेज्यायामावाहनबाधेपिफलम्॥ एषा शेषक्रिया शेषस्य पुत्रस्यावश्यकीत्यत्रकिं प्रमाणं, मृते पितरि पुत्रेण क्रिया कार्या विधानतइत्येव पितृमरणरूपेण निमित्तेन क्रियां विदधत् ॥ अस्य च यथाधिकारित्वनियोज्यत्वकर्त्तृत्वानि तथोक्तमितिदिक् ॥ अहरहः क्रियमाणं नित्यमिति न, दर्शश्राद्धादेरपि नित्यत्वात् किन्तु यत्र श्रुतिविहितकालजीवित्वप्रयुक्तोऽधिकारः तन्नित्यं यथा दर्शश्राद्धादि, यत्रतु तस्मिन् सति निमित्तत्वमनुष्ठाने तन्त्रं तन्नैमित्तिकं यथोपरागश्राद्धादि, इदञ्चद्वयमप्यावश्यकं अतोनोभयस्मिन्नपिसर्वाङ्गानुष्ठाननियमः, नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे । तीर्थस्नानं गजच्छायां प्रे-

२०

तश्राद्धन्तथैवव च ॥ तीर्थस्नानादौ त्रिके कुर्यादित्य-
नुषङ्गः, तीर्थस्नानं यदत्र कर्त्तव्यतयोक्तं तदावृत्तं,
अनावृत्तस्य, मलिम्लुचेप्यनावृत्तं तीर्थस्नानमपि-
त्यजेदित्यनेन निषेधात् आवृत्ते तीर्थस्नाने अशुभ
जनकत्वमात्रमनेन विधिना पर्युदस्यते तीर्थस्नान
विवाहदेवभवनं मन्त्रादिदेवेक्षणं दूरादेव जिजीवि
षुः परिहरेदित्यनेन ज्योतिर्वचनेननानावृत्ते अशुभ
जनकत्वावगतेः काम्यफलाजनकत्वं त्वनावृत्तावृत्त
स्नानादौ सर्वत्रैव, तस्य काम्यगोदानादिसाधार
ण्यात्, दानरत्नाकरमहादाननिर्णयादयोप्येवं ॥
पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः । अपरं
राशिमायाति लुप्तकालः स उच्यते ॥ अतीचारं गतो
जीवस्तं राशिं नैति चेत्पुनः । लुप्तः सम्वत्सरोज्ञेयो
अनर्हः सर्वकर्मसु ॥ लुप्तोत्राशुद्धइत्यर्थः । तथा ।
अतीचारगतोजीवः पूर्वभं नैव गच्छति । नाचरेत्तत्र
कर्माणि तदातत्रैव संस्थिते ॥ तथा, कृत्वातिचारं यदि-
पूर्वराशिं नायाति मन्त्री विबुधाधिपानरम् । दानं
विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम् ॥
तथा । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत् ।
इत्यादीनि सामान्यवचनानि रत्नाकरादिभिः सर्वैरेव
संगृहीतानि । विशेषवचनानि तु, शुभं भवनमागत्य

यदातिक्रमते गुरुः। तत्र चोद्वाहिताकन्या सुखं भर्त्तुः प्रमोदते ॥ तथा। अतीचारगते जीवे वृषे वृश्चिक कुम्भयोः। तत्र चोद्वाहिताकन्या संप्रीणीयात्कुलद्वयम् ॥ कन्यावृश्चिकमेषेषु मन्मथेऽथ वृषे झषे। अतीचारेऽपिकर्तव्यं विवाहादि बुधैः सदा ॥ तथा। वक्रातिवक्रावथवातिचारं करोति जीवोजगतोहिताय। यदा तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वसिष्ठः ॥ तथा, मकरस्थो यदा जीवो वर्जयेत्पञ्चमांशकम्। शेषेष्वपि च भागेषु विवाहः शोभनोमतः ॥ अत्राहुः एतानि यदि समूलकानि स्यु स्तदैभिः सामान्यवचनानां श्वेतं छागमालभेतेत्यनेन न हिंस्यात्सर्वाभूतानीत्यस्येव सङ्कोचं कोनाम नाभ्युपेयात् किन्तु एतानि विशेषवचनानि निर्मूलान्येव अज्ञातमूलानि सन्दिग्धमूलानि वा रत्नाकरमहादाननिर्णयकारादिभिः सर्वैरेव प्रामाणिकैरनादरणात् ॥ यत्तु ज्योतिर्निबन्धेष्वमीषां विशेषवचनानामुपनिबन्धनं तत्प्रतीयमानत्वमात्रेण नहि ते मीमांसाभियुक्ताः येन तल्लिखनबलेनामीषां समूलत्वमवसीयेत, अन्यथा कन्यां गते सवितरि दिनानि दश पञ्च च। पार्वणेन विधानेन तेषु श्राद्धं प्रदीयत इत्यादिवाक्यदर्शनाच्चतुर्दश्यामपि पार्वणं स्यात् ॥

तथा, अर्घेऽक्षय्योदके चैव पिण्डदानेऽवनेजने । त-न्त्रस्य विनिवृत्तिःस्यात्स्वधावाचन एवचेत्यादि दर्श नादन्नोत्सर्गादौतन्त्रतास्यात् । तथा ॥ गङ्गां प्राप्य-सरिच्छ्रेष्ठां मुण्डनं योन कारयेत् । क्रिया तस्याक्रिया सर्वा तीर्थद्रोही भवेन्नरः॥गङ्गां प्राप्यसरिच्छ्रेष्ठां कम्पन्ते पापसञ्चयाः । केशानाश्रित्य तिष्ठन्ति तस्मात्तांस्त त्र वापयेत् ॥ इत्यादि वचनाद्गङ्गायां क्वापि मुण्डन मावश्यकं स्यात् ॥ अथ मकरगुर्वादौ यद्विवाहादि-विधायकं वचनं तदाचारविरहादनादेयमिति यदि तदातीचारेपि तद्विधायकवचनान्यनादेयान्येव प्रामाणिकाचारविरहादिति ॥ अतएव,मलिम्लुचगुरु शुक्रबाल्यवार्द्धकास्तमयसिंहमकरान्यतरगुरुस्थिति पू र्वराश्यनागतातीचारिगुरुकवत्सरपूर्वराश्यागमिष्यद-तीचारिगुरुकपक्षत्रय वक्रिगुरुकाष्टाविंशतिवासरकेत्वा द्यद्भुतोत्तरसप्ताह गुर्वादित्य सिंहादित्य पौषादिमास चतुष्टयान्यतमैकाद्वित्र्यन्यतमदिनाधिकरण वृष्ट्युत्तरै-कद्वित्रिसप्ताहान्यतमदिनादिरशुद्धःसमयःतदन्यःशुद्ध इति दानरत्नाकरमहादाननिर्णयादौ सिद्धवल्लिखि तम् । दैवज्ञबान्धवे तु यद्यप्यपवादकवचनप्रामाण्ये सति कन्यावृश्चिककुम्भमीनमेषवृषा[illegible] गुरोर्म हातीचारे विवाहादौ न दोषइति गम्यते तथापि बहु-

तरनिषेधवाक्यदर्शनात् सिंहमकरगुरुवदत्रापि प्रवृत्तिर्निवृत्ता न चार्हतीति । यतः । अतीचारेण यो राशिर्लङ्घितो देवमन्त्रिणा । तत्राद्यो वत्सरो लुप्तो अनर्हः सर्वकर्मस्विति वचनेन तद्वत्सरस्य लुप्तत्वमशुद्धत्वमितिसिद्धं । तच्च केनापि नापोदितं तथाच यद्वत्सरलोपे विवाहाद्यभ्यनुज्ञानं तदेतद्राशिव्यतिरिक्तराशौ गुर्वतीचारस्यात्यन्तनिषिद्धपरं नतु वृषादिराशौ तदतीचारस्य सत्वे विवाहादिविधिपरमशुद्धसमये विवाहकरणस्य सदोषत्वनियमात् ॥ यथा वरं विषं भुंक्ष्व मा चाण्डालगृहे भुक्था इत्यस्य न विषभक्षणाभ्यनुज्ञानमर्थः किन्तु चाण्डालगृहभक्षणस्यात्यन्ताकरणीयत्वमर्थः ॥ श्रीपतिसंहितायान्तु व्यवहारोपबृंहितमेव वचनं मया लेख्ये न तु व्यवहारविरुद्धमिति प्रतीज्ञायातीचारे विवाहोपनयनादिनिषेधकान्येव वचनानि लिखितानि नतु तदपवादकानि प्रतिप्रसववचनानि, तथा च व्यवहारास्पृष्टतया तानि वचनानि न प्रमाणमिति तस्याशयः॥ अतएव रत्नावल्यां सुधाकरमहामहोपाध्याया अपि निषेधापवादकानि वचनानि व्यवहारविरुद्धानीत्यभिधाय निरास्थन्निति ॥ वस्तुतस्तु स्मृतीनां प्रामाण्यं महाजनपरिग्रहादवसीयते सचात्र प्रतिप्रसव

स्मृतीनां नास्ति किन्तु ग्रन्थोपनिबन्धनमात्रमस्ति तच्च यूपद्धिरदादिस्मृतिष्वप्यस्ति, नच तावन्मात्रेण प्रामाण्यं, तत्रैव व्यभिचारात् ॥ अथ तद्धदत्रैका न्तिकोऽव्यवहाराभावोनास्ति किन्तु प्रादेशिकइति चेत् तर्हि संशयास्तु प्रामाण्यमूलयोः ॥ ततः किमिति चेत् अननुष्ठानं नहि मूलसंशये प्रामाण्यसंशये वा अनुष्ठानं सम्भवति । अनेनैवाशयेन कल्पतरुकृता प्रचरदपि वाक्यमज्ञातमूलमुपेक्षितं, प्रतिज्ञातञ्च, न्यस्तं विज्ञातमूलं प्रचरदपि परित्यक्त मज्ञातमूलमि ति ॥ अथ मलमासे आवश्यककर्ममात्राचरणं क्षय- नामके तु नैवं, विकृतमासत्वन्तु द्वयोः समानमेव, तत्कथमीदृशं वैलक्षण्यमिति उच्यते, मलमासो ह्य- संक्रातोऽयन्तु द्विसंक्रान्तः । तदुक्तं । असंक्रान्तमा- सोधिमासः स्फुटं स्याद्विसंक्रान्तमासः क्षयाख्यः क- दाचित् । स च मेषादिषट्के तुलादिषट्के वेत्यत्राह । क्षयः कार्त्तिकादाविति । तुलादिषट्केऽधिमासपाते सति उपान्त्यपर्यन्तं विकृतमासः क्षयनामा अन्तिम- स्तत्रापि मलमासएव । तदुक्तं भीमपराक्रमे, त्रयो दशन्तु श्रुतिराह मासं चतुर्दशः क्वापि न दृष्टपूर्वः । एकत्रमासद्वितयं यदि स्यादब्देऽधिकं तत्र परोऽधि- मास इति ॥ अत्र हि प्रथमचरमौ ह्यसंक्रान्तौ मध्य

मास्त्वसंक्रान्ताः । तत्रापि नैकस्मिन्नब्दे द्वौ मलमासौ सम्भवतः । दिवसस्य हरत्यर्कः षष्टिभाग मृतौ ततः । करोत्येकमहश्छेदं तथैवैकञ्च चन्द्रमाः ॥ एवमर्द्धतृतीयानामब्दानामधिमासकमिति गण नानुवादरूपज्योतिर्वचनविरोधात् । तथाचात्रा द्यन्तयोर्मलमासत्वसम्भावनायामन्त्यस्य मल- मासत्वे भीमपराक्रमवचसा व्यवस्थापि । आद्यस्या संक्रान्तस्यापि न मलमासत्वं वचनबलात् ॥ मल- मासे च आवश्यकमेव कर्म कार्यं, मलं वदन्ति काल- स्य मासं कालविदोऽधिकं । नेहेनात्र विशेषेज्याम- न्यत्रावश्यकाद्विधेरिति वचनात् ॥ आवश्यकं च नित्यं नैमित्तिकं पूर्वसंकल्पितकाम्यञ्च । यस्यैव- ह्यननुष्ठाने पापं तदेवावश्यकमिति, तच्चाह्निके स्नानं विभ्राडादिचतुष्कशून्यं सन्ध्यावन्दनं, ब्रह्म- यज्ञः, षण्णांपितॄणां षण्णां मातॄणां च तर्पणं, श्रौतम- न्त्रेण पञ्चदेवतापूजा, वैश्वदेवहोमः, यक्ष्मबल्यन्तं बलिकर्म, नित्यश्राद्धं, हन्तकारश्चेति ॥ गोग्रासस्या प्यावश्यकत्वं, दद्यादनेन मन्त्रेण गवां ग्रासं सदैव- हीति वचनबलात् । एकादश्युपवासः, अमावास्या पार्वणं, अत्र तु ग्रहोपरागे कामनां विनैव स्नानं, पार्वणञ्च ॥ ननु तीर्थस्नानं गजच्छायामि-

त्यादिना तीर्थस्नानस्य प्रतिप्रसूतत्वात् कथमेवं । इत्थं, यत्, मलिम्लुचेऽप्यनावृत्तं तीर्थस्नानमपित्यजेत् । इत्यनेन तीर्थस्नाने आवृत्तानावृत्तसाधारणे गोदानादिवत् पुण्याजनकत्वे वचनान्तरात्सिद्धएव सति अनावृत्ते अनिष्टजनकत्वमपीत्यभिधीयते । तीर्थस्नानं गजच्छायामित्यादिना त्वावृत्तं यत्तीर्थस्नानं तत्रानावृत्ततीर्थस्नानवत् दृष्टदोषोनास्तीत्यभिधीयते नतु काम्यफलजनकत्वमपि, नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेरित्यादिना मलमासे काम्यकर्मनिषेधात् ॥ ननु मलमासे काम्यकर्मनिषेधे प्रेतश्राद्धषोडशी कथं क्रियते सा हि नैमित्तिकी काम्या चेति उच्यते, साह्यावश्यकी, यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश । पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपीत्यादिनाऽकरणे निन्दाप्रतिपादनात् । किञ्च तद्दक्थग्राहिणः पुत्रस्यापि तच्छ्राद्धानाचरणे निन्दा श्रूयते । तद्यथा । अकृत्वा प्रेतकार्याणि प्रेतस्य धनहारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेदिति स्मृतिरिति ॥ हन्तैवं नैमित्तिकतया क्रियतां नतु काम्यतया, तथाच काम्याभिलापपूर्वकः सङ्कल्पइह त्यज्यतां कामिन्येव नियोज्ये तस्यावत्मरादिति बाढं नैमित्तिकतयैव क्रियते

नतु काम्यतया, अतएव पात्रब्राह्मणाद्यङ्गहानावपि निर्विचिकित्सन्तदनुष्ठानं शिष्टानां, सर्वशक्त्यधिकरणे आवश्यके किञ्चिदङ्गहानावपि फलसिद्धिरिति सिद्धान्तनात् ॥ हन्त कथन्तर्हि तत्र काम्याभिलापपूर्वकः सङ्कल्पआदौ, शिष्टाचारादितिब्रूमः । कथमन्यथा मासिकेष्वपि फलार्जकप्रधानापूर्वजनककलिकापूर्वमात्रजनकेषु सङ्कल्पः संगच्छतां, नहि कलिकापूर्वेपि कामी अधिकारी किन्तु निष्कामः, अङ्गापूर्ववत् । प्रधानापूर्वएव हि वाक्यर्थीभूते सोधिकारी तथैव तिर्यगधिकरणे सिद्धान्तनादिति ॥ तदयं संक्षेपः॥ तीर्थस्नानं मलमासे फलजनकं नभवत्येव गोदानादिवत्, किन्त्वावृत्तं तदनिष्टजनकमपिन भवतीति, अनावृत्तन्तु कालदोषात् पुण्याजनकमनिष्टजनकञ्चेति ॥ गजच्छाया तु हस्तादित्ये मघाचन्द्रे कृष्णपक्षे त्रयोदश्यां भवति । तथा च यद्याश्विनोमलमासस्तदा तदुत्तरचतुर्दश्यां कन्याराशिसंक्रान्तौ कथं ततः प्राक् गजच्छाया, यदि च भाद्रोमलमासस्तदा द्वितीयभाद्रामावास्यामुल्लङ्घ्य कन्यासंक्रान्तेः क मलमासे गजच्छाया तस्मात्कल्पतरुप्रभृतौ निबन्धे या गजच्छाया परिभाषिता सेह न संभवतीति श्राद्धाध्याये हलायुधधर्माधिकरणिकै-

रन्यैव गजच्छायोक्ता । तद्यथा, राहुर्वै हस्ती भूत्वा चन्द्रमसं ग्रसतीति श्रुत्या राहुणा यश्चन्द्रमसोग्रासः सा गजच्छाया, सूर्यग्रासेऽपि चन्द्रस्यैव ग्रसनीयत्वेन ग्रसकत्वाद्विग्रसनं, तन्न गजच्छाया सूर्यचन्द्रोपराग-श्राद्धं तदपि गजग्रासे क्रियत इति सिद्धम् ॥ प्रेत श्राद्धानि नित्यनैमित्तिकत्वेन कार्याण्येव बाधवि रहादित्यन्ये ॥ सम्प्रदायस्तु काम्यत्वेऽपि कार्याणि, गर्भे वार्द्धुषिकत्वे च मृतानां पिण्डकर्मस्विवति प्रति प्रसवात् । यद्यपि पिण्डकर्म मृतानामेव तथाऽपि मृतानामिति विशेषणोपादानेन नावनीतघृतवदचि-रत्वलाभेन प्रेतश्राद्धप्रतीतेः ॥ यत्तु नित्यनैमित्ति-के कुर्यात्प्रयतः सन्मलिम्लुचे । तीर्थस्नानं गजच्छा-यां प्रेतश्राद्धन्तथैव चेत्यत्र नित्यमहरहः कर्तव्यं स्नानसन्ध्यापञ्चमहायज्ञादि । नैमित्तिकं पुत्रजन्म क्रियादिकम् एकैकविशेषणावच्छिन्नत्वात् । दर्श श्राद्धन्तु नित्यनैमित्तिकम्, तदुक्तं मार्कण्डेयपुराणे पञ्चयज्ञाश्रितं नित्यं यदेतत्कथितन्तव । नैमित्ति कन्तथैवान्यत्पुत्रजन्मक्रियादिकम् ॥ नित्यनैमित्ति-कं ज्ञेयं दर्शश्राद्धादि पण्डितैरिति ॥ किञ्च नित्य श्राद्धमदैवं स्यादित्यादौ नित्यपदं प्रात्यहिकपञ्च महायज्ञान्तर्गतश्राद्धे प्रयुक्तम्, अतएव काम्यमप्य-

हरहः क्रियमाणं हिरण्यदानं मलमासे कर्तव्यमेव नित्यपदार्थत्वात् । यज्ञदानव्रतानीत्यत्र तु दानपरं न कुर्यान्मलमासे तु महादानव्रतानीत्येकवाक्यतानुरोधादिति श्राद्धविवेकमतन्तन्न नित्यं शुचिविहितकालजीवितमात्राधिकारिकम्, नैमित्तिकन्तु शुचिविहितकालजीविनिमित्तवदधिकारिकम्, काम्यन्तु शुचिविहितकालजीविकामनावदधिकारिकमिति कर्ममीमांसकानां पन्थाः । तथा च नित्यनैमित्तिके इत्यत्र एनेएव नित्यनैमित्तिके अन्वीयेते सर्वतन्त्रसिद्धान्तसिद्धत्वेनोगस्थितिलाघवात् न तु तदुक्तं वाक्यमिदममूलकमेव ॥ यत्तु नित्यपदं प्रात्यहिकश्राद्धे प्रयुक्तमतस्ताच्छब्द्यमिति तन्न साहि परिभाषा बृहस्पदवैच्छिकी नतु मीमांसानुरुद्धा सकलनित्यासंग्राहकत्वात् किञ्च पञ्चमहायज्ञा नित्यपदार्थ इत्यभिधाय नित्यश्राद्धमात्रंनित्यपदार्थंवदतस्तव पूर्वापरविरोधः ॥ यच्च काम्यं हिरण्यदानादि प्रात्यहिकतया नित्यत्वात्मलमासेपिकार्यमिति तन्न प्रात्यहिकत्वं न कुतः प्राप्तम् ॥ अहरहः कृत्यत्वेन पूर्वसङ्कल्पनादितिचेत् बाढं तद्धि नित्यसमं पूर्वं व्रतं गृहीत्वाऽपरिपालने निन्दार्थवादात् अन्यथाचेत्तदातस्यप्राप्तिरेव न सर्वकर्मसु तं त्यजेदित्यनेन विशेषविहिते

नरकर्मणामनिषेधात् मलं वदन्तिकालस्येत्यादिना आवश्यककर्मणामेव तत्र विधानात् अतएव नित्य नैमित्तिके इत्यत्र नित्यमावश्यकं, नैमित्तिकमुपरागादिनिमित्तकं, गोवृषन्यायादिति निबन्धारः एतेन दानमात्रं निषिद्धं गजच्छायाप्रतिप्रसवेनामावास्यादिश्राद्धादि निषिद्धम् । प्रेतश्राद्धप्रतिप्रसवेनैकोद्दिष्टान्तरं निषिद्धमित्यपास्तं एतस्य प्रपञ्चार्थत्वात् ॥ अतएव मलं वदन्ति कालस्य मासं कालविदोऽधिकं । नेहेतात्र विशेषज्यामन्यत्रावश्यकाद्विधेरित्यर्थः संक्षेपः ॥ आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते इति व्याघ्रवचनं ब्राह्मणत्वजातिपुरस्कार प्रवृत्तं यदि स्यात् तदाक्षत्रादेरपीमं सपिण्डनकालं न विदधीत तथा च तेषां सपिण्डनकालाकाङ्क्षाऽपूर्णैवस्यात् तथाचाद्यमेकादशेऽहनीत्यत्र यथैकादशाहपदं स्वजात्युक्ताशौचान्तद्वितीयाहोपलक्षकं तथेदमपि द्वादशाहपदं स्वजात्युक्ताशौचान्ततृतीयाहोपलक्षकं ननु लघोरप्यशौचान्तद्वितीयाहस्योपलक्षकं जातिपुरस्कारप्रवृत्ताशौचोपस्थितिकाले जात्यपुरस्कारप्रवृत्तस्य त्र्यहाशौचादेरुपस्थितौ हेत्वभावात द्वादशाहपदञ्च ब्राह्मणजातिपुर-

स्कारप्रवृत्ताशौचान्ततृतीयाहोपस्थापकमिति स्फुटमेव तेन जातिपुरस्कारप्रवृत्ताशौचान्ततृतीयाहस्तदानीमुपस्थातुं युक्तः, न तु यत्किञ्चिदशौचान्ततृतीयाहः तस्य तदानीमुपस्थितौ हेत्वभावात् लाघवस्यचानुपस्थापकत्वात् क्षतान्ततृतीयाहस्यापि निरासः ॥ नन्वेवमाद्यश्राद्धमपि त्वदुक्तरीत्या त्र्यहाशौचान्तद्वितीयदिने न स्यात् आद्यमेकादशेहनीत्यनेन स्वजातिपुरस्कारप्रवृत्ताशौचान्तद्वितीयदिनस्योक्तत्वात् त्र्यहाशौचस्य स्वजात्यनुक्तत्वादितिचेत् न अशौचव्यपगम इति विष्णुवचनेन हि तदा आद्यश्राद्धं विधीयते नत्वन्येन ॥ अथोपनयनकालनिर्णयः ॥ तत्र दक्षिणायनमासषट्कं निषिद्धं, उत्तरायणेपि सर्वाः कृष्णास्तिथयोनिषिद्धाः, शुक्लास्वपि प्रतिपदष्टमीचतुर्दशीपौर्णमास्यः सर्वा अनध्यायत्वेन निषिद्धाः, स्वाध्यायेष्वपि चतुर्थी षष्ठी सप्तमी नवमी त्रयोदश्यः स्वतएवनिषिद्धाः, त्रयोदशीचतुर्दश्योर्दिवावेव द्वादश्यपि गलग्रहत्वेन निषिद्धा, आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते । गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहमित्युपक्रम्य, अष्टम्या सप्तमीविद्धा चतुर्दश्यात्रयोदशी । द्वितीया प्रतिपद्विद्धा गलग्रहउदाहृतइत्युपसंहारा-

त् । चैत्रशुक्ला द्वितीया माघशुक्ला द्वितीया च स्वरूपेणैव निषिद्धा । चैत्रशुक्लतृतीया आषाढ शुक्लदशमी माघशुक्लसप्तमी एतास्तिथयोमन्व न्तरादित्वेन निषिद्धाः । वैशाखशुक्लतृतीया युगा दित्वेन निषिद्धा । हरिशयनद्वादशी स्वरूपेणैव नि- षिद्धा, विहिततिथयोपि संक्रान्त्यवरुद्धा निषिद्धाः, तत्पूर्वतिथयस्तु तत्पूर्वतिथित्वेन निषिद्धाः । पौषमाघ फाल्गुनचैत्रास्तु वृष्ट्या दूष्यन्ते, वैशाखज्येष्ठाषाढेष्व- ति वृष्ट्याऽतिवातेन चानध्यायः, ग्रहणकाले भूकम्पो ल्कापातकरकापातवज्रपातादिसमाहारे व्रतबन्धे त्रयोदशाहमशुद्धं किञ्चिदूनतत्समाहारे दशाहं ग्र- हणाद्येकैकोदये त्र्यहं । उपनयनपूर्वदिने सायं स- न्ध्यायां गर्ज उपनयनदिनमनध्यायं करोति । हस्त चित्रा स्वाती श्रवणा धनिष्ठा शतभिषा पुष्याश्वि- नी मृगशिरोरेवती पूर्वाषाढ पूर्वफल्गुनी एतानि नक्षत्राणि व्रतबन्धे सामान्यतः प्रशस्तानि । लग्ना- नि तु वृषसिंहतुलाधनुर्मीनात्मकानि विहितानि । बुधगुरुशुक्राः केन्द्रस्थास्त्रिकोणस्थाश्चप्रशस्ताः । रवि चन्द्रगुरुताराबलवतीषु, गुरुशुक्रविवारे व्रतं शस्तं, रविमङ्गलराहुकेतवोलग्नस्थानिषिद्धाः, चन्द्रः सप्ता धिकोनिषिद्धः, षट्त्र्येकादशगाः सूर्यशनिकुजाः

प्रशस्ताः, नवपञ्चमगाः पापानिषिद्धाः, लग्नस्था रविशनिकुजाश्च निषिद्धाः, धनस्थाः सहजस्थाश्च शस्ताः, बन्धुस्थानिषिद्धाः, पुत्रस्थानिषिद्धाः. षष्ठ-राशौशस्ताः, सप्तमराशौनिषिद्धाः, निधनस्थानिषि-द्धाः चन्द्रस्तु षष्ठेऽष्टमेनिषिद्धः, गुरुर्जन्मनि षष्ठेऽष्टमे तृतीये चातिनिषिद्धः, दशमे चतुर्थे च निषिद्धः, गुरु र्द्वितीये पञ्चमे च शस्तः, द्वादशे अतिनिषिद्धः, शेषेषु मध्यमः । जन्मर्क्षे जन्मोदये जन्ममासे जन्म चन्द्रे च व्रतबन्धः प्रशस्तः, गुरुवारे अतिप्रशस्तः। शाखाधिपे बलिनि व्रतं शस्तम् ॥ ते च, ऋगथर्वसा-मयजुषामधिपागुरुसौम्यभौमसिता यथासंख्यम् ॥ मेखलाबन्धसमये सर्वथा पञ्चमं गृहम् । शुभयुक्तं प्रशंसन्ति तदालोकितमेव वा ॥ इति महामहोपाध्या-यसान्मिश्रवाचस्पतिविरचितोद्वैतनिर्णयः सम्पूर्णः ॥

# भूमिका

## महामहोपाध्याय मिश्र वाचस्पतिः ॥

मिथिलादेशे बहवो वाचस्पतयो ऽभूवन् तेषु प्रधानतया द्वावेव परिगण्येते वृद्धोऽभिनवश्च ॥ तत्र वृद्धो द्वादशदर्शनटीकाकारत्वेन प्रसिद्धः पञ्जीप्रबन्धसमयात्प्रागेवाविरभवत् ॥ एतद्द्वैतनिर्णय कर्ताऽभिनवो मिश्रवाचस्पतिः मैथिलानामुच्चतमेकुले "पलिवाड समौलि" इत्यभिधे सांसेप्तान्मिश्रगिरिपतेः समजनि । अमुष्य पुत्रः स्वरोदय टीकाकारो मिश्रनरहरिः, पौत्रस्तु द्वैतपरिशिष्टादिनिबन्धकारको मिश्रकेशवः ॥ मिश्रवाचस्पतिस्तु न्यायमीमांसयोः स्मृतिषु च परां प्रतिष्ठामवाप्य ४९ एकोनपञ्चाशन्निबन्धानकरोत् ॥ तेषु आचारचिन्तामणि, विवादचिन्तामणिः, व्यवहारचिन्तामणिः, शुद्धिचिन्तामणिः, श्राद्धचिन्तामणिः, कृत्यप्रदीपः, कृत्यमहार्णवः, ( महाराजाधिराज हरिनारायणाज्ञया रचितः) पितृभक्तितरङ्गिणी ( महाराज रामभद्राज्ञया सर्वान्ते रचिता ) च मत्सग्रहे सन्ति ॥ द्वैतनिर्णयस्तु भैरवसिंहधर्मपत्न्या जयानोमहादेव्या आज्ञया रचित इत्यस्मिन्नेव ग्रन्थेस्फुटमभिहितम् ॥ महाराज भैरवसिंहराज्यारम्भस्तु पञ्चत्रिंशदधिकचतुर्दशशतीमिते शाके १४३५ बभूव ॥ एतन्मुद्रणाधारपुस्तकानि पट् । तत्र ममैव पूर्वतरसप्तमपुरुषेण महामहोपाध्याय परशुरामशर्मणा रघुदेवसरस्वतीनां समय यज्ञपल्लो ( जगली ) ग्रामे ताडिपत्रे लिखितमाद्यम्, म. म. मीमांसकशिरोमणि श्रीचित्रधरमिश्रमहाशयस्य खण्डितमपरम्, अन्यानि ४ दरभङ्गाराजकीयपुस्तकालयस्थानि ॥ द्वैतनिर्णयस्यास्य तिस्रष्टीकाउपलभ्यन्ते, महामहोपाध्याय मधुसूदनकृतो जीर्णोद्धारः १ म म. गोकुलनाथकृतः कादम्बरीप्रदीपः २ केशवमिश्र व्याख्यानुसारिणी वागीशकृतादीपिका ३चेति ॥

संशोधकः

श्रीपरमेश्वर शर्मा ॥